व्रीहियवौ स यावद्वीर्यवद् ह वा अस्यैते सर्वे पशव आलब्धाः स्युः, तावद् वीर्यवद्ध वै अस्य हविरेव भवति' ( श० १।२।३।७ ) इति। एते व्रीहियवाः सर्वेषां पशूनां प्रतिनिधित्वेन गृह्यन्ते। 'तवेमे पञ्च पशवो विभक्ता गावः, अश्वाः, पुरुषाः, अजावयः' ( अथर्ववे० सं० ११।२।९ )। अतो व्रीहियवनिर्मितचरुपुरोडाशहोमेन सर्वपशूनामालम्भनकार्यं सिद्ध्यति। यदा यजमानो यज्ञे दीक्षितो भवति तदा स देवताभ्यः पशुरूपेणात्मानं समर्पयितुं निश्चिनोति। देवताभ्यः प्राप्तः पशुयागो निष्क्रम्य गवि, गोर्निष्क्रम्य गवये, ततोऽजे, तत उष्ट्रे, ततो हव्यभागे, ततो निष्क्रम्य पृथिवीं प्रविवेश। पृथिवीमाविश्य व्रीहियवरूपो भवति इत्येवमैतरेयकेऽपि वर्णितम्। तेन तन्निर्मितचरुपुरोडाशेषु पशुकल्पनया यज्ञो निष्पद्यते। यद्यप्यर्थवादभूतान्येव तादृशानि वचनानि, तथापि प्रथमकल्पा( मुख्या )सम्भवे प्रतिनिधयो गृह्यन्त एव।

'नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति। आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥' ( म० ५।८७ ) इत्यत्र निःस्नेहनारास्थिस्पर्शे गवालम्भो विहितः। परमत्र स्पर्श एवालम्भः, सर्वैरपि टीकाकारैस्तथाभ्युपगमात्। अत एव गवालम्भेऽपि न गवां वधः, किन्तु व्रीहिमयादिगोनिर्माणेनैव तन्निर्वर्त्यते। कलियुगे भावदोषशङ्कया सोऽपि निषिद्ध एव। साङ्गोपाङ्गविधिपालनासम्भवात् सार्वभौमक्षत्रियासम्भवाच्चाश्वालम्भोऽपि निषिद्धः। मैथुनमन्तरा सृष्टिसामर्थ्याभावात् कलौ देवरात् सुतोत्पत्तिश्च निषिद्धा। वर्णाश्रमलोपबाहुल्याद् वित्तैषणापुत्रैषणालोकैषणादिव्युत्थानदुष्करत्वात् संन्यासोऽपि निषिद्धः। क्वचित् प्रतिप्रसवोऽपि दृश्यते—'यावद्वर्णविभागः स्याद् यावद्वेदः प्रवर्तते। अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे ॥' तथैव पलपैतृकमपि कलौ निषिद्धम्, जिह्वालौल्यात् पलपैतृकनाम्ना विनापि श्राद्धं मांसभोजनादौ प्रवृत्तेः।

ब्रह्मसूत्र ( १।४।२ )शाङ्करभाष्ये—'प्रकृतिशब्दश्च विकारे दृष्टः, तथा 'गोभिः श्रीणीत मत्सरम्' ( ऋ० सं० ९।४६।४ ) इति। अत्र गोदुग्धेन सोमरसश्रपणमुक्तम्। अतो यत्र गोहवनोल्लेखः स्यात्तत्र गोदुग्धघृतादिकमेव प्रत्येतव्यम्। तद्यथा—'आज्येन पयसा दध्ना सम्भरत्येव गोर्मखम्।' (म० भा० शा० प० २६३।३८)। 'रघुवंशेऽपि—'होतुराहुतिसाधनम्' ( रघु० १।८२ ) इति गोराहुतिसाधनत्वमुक्तम्। तत्रैव द्वितीयसर्गाष्टमे नन्दिन्या होमधेनुत्वमुक्तम्। 'धाना धेनुरभवद्

है। अतः व्रीहि-यव से बनाये गये चरु-पुरोडाश के होम करने से समस्त पशुओं के आलंभन कार्य की सिद्धि हो जाती है। जब यजमान यज्ञ में दीक्षित होता है, तब वह देवताओं के निमित्त पशु रूप से अपने को अर्पण करने का निश्चय करता है। देवताओं के लिये किया गया पशुयाग उनसे निकल कर गो में, उससे निकल कर गवय में, उससे निकल कर अज में, उससे निकल कर उष्ट्र में, उससे निकल कर हव्यभाग में, उससे निकल कर पृथिवी में प्रविष्ट हुआ। पृथिवी में प्रविष्ट होकर वह व्रीहि-यवरूप हो जाता है, यह बात ऐतरेयक ने बताया है। उस कारण तन्निर्मित चरु-पुरोडाशों में पशु की कल्पना कर यज्ञ का निष्पादन किया जाता है। यद्यपि ये सब वचन अर्थवाद रूप हैं, तथापि प्रथम कल्प ( मुख्य ) का सम्भव न हो सकने पर प्रतिनिधियों का ग्रहण किया ही जाता है।

मनु ने निःस्नेह नरास्थि का स्पर्श करने पर गवालम्भ का विधान किया है। यह आलम्भ स्पर्शरूप ही है। सभी व्याख्याकारों ने उसे स्पर्शरूप ही बताया है। अत एव गवालंभ में भी गौ का वध नहीं किया जाता, अपि तु व्रीहिमय गौ का निर्माण करके ही गवालंभ को सम्पन्न किया जाता है। कलियुग में भावदोष के कारण गवालंभ का भी निषेध ही किया गया है। उसी तरह सांगोपांग विधिपालन करना संभव न हो सकने से और किसी सार्वभौम क्षत्रिय के न रहने के कारण अश्वालंभन का भी निषेध किया गया है। मैथुन के बिना सृष्टि करने का सामर्थ्य न रहने से कलियुग में देवर से सुतोत्पत्ति ( नियोग ) का भी निषेध किया गया है। वर्णाश्रमलोप की बहुलता के कारण वित्तैषणा, पुत्रैषणा, लोकैषणा आदि से निवृत्ति होना अत्यन्त कठिन होने से संन्यास का भी निषेध किया गया है। तथापि 'यावद् वर्णविभागः स्याद् यावद् वेदः प्रवर्तते। अग्निहोत्रं च संन्यासं तावत् कुर्यात् कलौ युगे ॥' इत्यादि वचनों से उसका प्रतिप्रसव भी किया गया है। उसी तरह पलपैतृक का भी कलि में निषेध किया गया है, क्योंकि जिह्वालौल्य से पलपैतृक के नाम पर बिना श्राद्ध के भी मांस भोजनादि में मानव-प्रवृत्ति दिखाई देती है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वत्सो अस्यास्तिलोऽभवत्' ( अथर्व० १८।४।३२ ), 'अश्वाः कणाः गावस्तण्डुलाः' ( अथर्व० ११।३।५ ), 'अन्नं हि गौः' (श० ४।३।१।२५) अत्र ओदनोऽपि गौरुच्यते। तेन तेर्गोयागो निष्पद्यते। ओषधीभिस्तथा ब्रह्म यजेरंस्तेन तादृशाः। (म० भा० शा० प० २६३।३३) 'नमस्कारेण हविषा·····स्वाध्यायैरौषधैस्तथा। पूजा स्याद्देवतानां तु यथा शास्त्रनिदर्शनम् ॥' (म० भा० शा० प० २६३।८)। 'अहिंसैव परो धर्मस्तत्र वेदेऽस्ति कीर्तितः। साक्षात्पशुवधो यज्ञे नहि वेदस्य सम्मतः ॥' ( स्कन्दपुराण-वैष्णवखण्ड ६।४।४९ )। 'ब्रह्मणा तु पुरा सृष्टा ओषध्यः सर्ववीरुधः। यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ॥ निघण्टु-रत्नाकरे—'उक्षा ऋषभश्च ओषधिविशेषः। अष्टवर्गप्रकरणे ऋषभस्य गुणा उक्ताः। 'ऋषभो मधुरः शीतो वृष्यः पुष्टि-करस्तथा।' उक्षा, ऋषभः, वृषभो, गौः, एते शब्दा गोपर्यायवाचकाः। तस्मादेतेषां हवनेनापि गोयज्ञपूर्तिर्भवति। ऋषभपर्याय-वाचका अनडुद्गवादयोऽपि ऋषभौषधिरूपा एव। ऋषभपाको गोपाकशब्देनाप्युच्यते। वृषभमांसपदेन ऋषभसार एव बोध्यते। 'कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत्।' अत्र कपित्थसारो मांसपदेनोक्तः। 'खर्जूरमांसान्यथनारिकेलम्' अत्र-खर्जूरसारभाग एव मांसत्वेनोक्तः। अस्थिबीजादिकमस्थिशब्देनोच्यते। वल्कलं चर्मोच्यते। रसो रुधिरम्, मांसं मांसलं दुग्धसारादिकमुच्यते। रामायणीयमांसभूतौदनेन चेति इत्थं व्याख्यातं शिरोमणिकृता—मा नास्ति अंसो राजभागो यस्यां सा भूः पृथिवी, उतं वस्त्रम्। मांसभूश्च, उतञ्च, ओदनश्चैतेषां समाहारो मांसभूतौदनं तेन त्वां यक्ष्ये। 'माशब्दाद्रसना ज्ञेया तदंशान् रसानाप्रियान्। सदा यो भक्षयेन्नित्यं स भवेन्मांससाधकः ॥' ( आगमसारः )। प्रजापतिस्मृतिरीत्या माषोऽपि मांसो भवति। अज इति अन्नम्। बीजं वीरुद्। तमालभ्य उपयुज्य प्रजाः पशून् प्राप्नोति। गौणाः शब्दाः। (मीमांसादर्शने शावरभाष्ये १।२।१०) 'अजसंज्ञानि बीजानि' (म० भा० १२।३३७।४), 'पशोरन्नस्य भूमानं गवां स्फातिं नियच्छति' (अथर्व० १९।३१।८) अत्र गवां वृद्धिः प्रार्थिता। 'महांस्त्वेव गोर्महिमा' (श० ३।३।३।१), 'गोस्तु मात्रा न विद्यते' (वा० सं० २३।४८), 'आगावो अग्मन् उत भद्रमक्रन्। सीदन्तु गोष्ठे रणयन्तु अस्मे' ( ऋ० सं० ६।२८।१ ) अत्र गोष्ठे स्थिताभ्यो गोभ्यो भद्रमी-प्सितम्। 'गावः स्तेन ईशत मा अघशंसः' (ऋ० सं० ६।२८।७), 'हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात्। दुहामश्विभ्यां पयो अघ्न्येयं' (ऋ० सं० १।१६४।२७) ऋग्वेदसंहिताभाष्ये (१।१२४।११) गवामश्वानामिति सायणाचार्यः।

यदुक्तम्—'यज्ञे हिंसा अहिंसैव भवतीति याज्ञिकानां रीत्याऽसंगततैव। यतो हि सर्वस्यैव वेदस्य यज्ञार्थमेव प्रवृत्तिः। 'वेदा हि यज्ञार्थमभिप्रवृत्ताः' 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( जै० सू० १।२।१ ) इत्यादि प्रमाणेभ्यः। तेन 'मा हिंसी रदितिं विराजम्' (वा० सं० १३।४३) इत्यादिमन्त्राणां यज्ञप्रवृत्तहिंसाप्रतिषेधार्थमेव प्रवृत्तिः, यज्ञभिन्नकर्मसु याज्ञिकैर्विधानानभ्युपगमात्। तथा च यज्ञादन्यत्र हिंसानिषेधो नोपपद्यत एवेति, तदपि तुच्छम्, 'मा हिंस्याद्' इत्यादिवाक्यानां रागप्राप्तहिंसानिषेधार्थं प्रवृत्तेः। इष्टप्रेप्सूनामिष्टप्राप्त्युपायोपदेशवदनिष्टपरिजिहीर्षूणामनिष्टपरि-हारोपायोपदेशस्यापि वेदार्थत्वात्। 'न सुरां पिबेत्', 'नानृतं वदेत्' इत्यादिनिषेधानां रागप्राप्तनिषेधेनैव सार्थक्यात्। यज्ञ-पर्यवसायित्वात्तु तेषामपि यज्ञार्थत्वोपपत्तेः। ब्रह्मपर्यवसायित्वेन तु यज्ञानामपि तत्रैव पर्यवसानम्। नैतावता 'मा हिंस्याद्'

ब्रह्मसूत्र ( १।४।२ ) शाङ्करभाष्य में 'प्रकृति' शब्द को विकार अर्थ में बताया है, ऋग्वेद, महाभारत, रघुवंशकाव्य, अथर्ववेद, स्कन्दपुराण वैष्णवखण्ड, निघण्टुरत्नाकर, आगमसार, मीमांसादर्शन, शावरभाष्य, शतपथ, वाजसनेयसंहिता, सायणाचार्य आदि सभी ने उसका समर्थन किया है।

यह जो कहा कि—यज्ञीय हिंसा को अहिंसा कहना असंगत है, वह भी निःसार है। 'मा हिंस्यात्' यह हिंसासामान्य निषेध तो रागप्राप्त हिंसा का ही है। इस कारण वह निषेध यज्ञिय हिंसा का नहीं है। अन्यथा 'अग्नीषोमीयं पशुमालभेत' आदि विधियां अनवकाश होंगी। किञ्च, निषेध के लिये विधान नहीं किया जाता, अन्यथा विधान करना ही व्यर्थ होगा।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यादीनामपि यज्ञविहितनिषेधकत्वम्, 'अग्नीषोमीयं पशुमालभेत' (तै० सं० ६।१।११।६) इत्यादिविधीनामनवकाशत्वापत्तेः। किञ्च नहि निषेधाय विधीयते, नैरर्थक्यात्। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायापाताच्च।

यदपि 'स्वधिते मैनं हिंसीः' (वा० सं० ६।१०) इति विपरीतार्थकं मन्त्रमुक्त्वा पशूनामङ्गच्छेदनम्' (का० श्रौ० सू० ६।६।८) इति, तदपि तुच्छम्, आम्नायबाह्यदृष्ट्याहिंसाया अपि शास्त्रदृष्ट्याऽहिंसात्वावगमेन तदुपपत्तेः, 'आम्नायवचनादहिंसा प्रतीयेत' (नि० १।१६) इत्यादिना यास्कादिभिः समाहितत्वात्। 'या वेदविहिता हिंसा नियतास्मिश्चराचरे। अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्बभौ ॥' (म० ५।४४) 'तस्माद्यज्ञे वधोऽवधः' (म० ५।३९) इति मन्वाद्युक्तेश्च। किञ्च, मन्त्रोऽपि तथैव ब्रूते—'न वा उ एतन्म्रियसे न रिष्यसि देवां इदेषि' (वा० सं० २३।१६) इति। तस्माद् योगात् हिंसाप्यहिंसैव।

यदपि च—'दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् प्राश्य' (आश्वला० श्रौ० सू० ६।१३) इति मन्त्रार्थाननुसृतो विनियोगः, मन्त्रगतदधिकावन्नीति शब्दस्याश्वपरत्वेन तदेकदेशस्य दधिशब्दस्य दूरतो दधिसम्बन्धाभावात्' इति, तदपि यत्किञ्चित्, दधिवाचकत्वाभावेऽपि द्रव्यविधया मन्त्रप्रयोगस्य 'दण्डी प्रैषानन्वाह' इत्यत्र दण्डस्येवादृष्टार्थत्वाभ्युपगमेनादोषात्।

किञ्च, यथा इन्द्रार्थाया अपि 'कदाचन स्तरीरसि' इति ऋचः, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' (मैत्रायणीसंहिता ३।२।४) इति श्रुत्या लिङ्गं बाधित्वापि गार्हपत्योपस्थाने विनियोगाद् लिङ्गापेक्षया श्रुतेर्बलीयस्त्वात्। मन्त्रलिङ्गं तु श्रुत्यानुगुण्येन नीयते, तथैवार्षविनियोगवशाद् मन्त्रार्थोऽपि नेयः। सर्वथाप्यर्थसम्बन्धराहित्ये द्रव्यरूपेण विनियोग उक्त एव। तथैव नवग्रहमन्त्राणामपि विनियोगवशाद् ग्रहपरत्वेन नयनं युक्तमेव। 'मन्त्राणां विनियोगभेदादर्थभेदोऽपि मन्तव्यः।' इति समाजिनोऽपि वदन्ति। तद्यथा अथर्ववेदभाष्ये २२ पृष्ठे राजारामशास्त्री आह—'श्रौतसूत्रों और गृह्यसूत्रों में मन्त्रों के जो विनियोग बताये गये हैं, उनसे भी मन्त्रों के अर्थों पर बहुत कुछ प्रकाश पड़ता है, क्योंकि विनियोग भी अर्थ सम्बन्ध को देखकर ही किये जाते हैं' इति। तादृशा अपि विनियोगा भवन्ति, यत्र मन्त्राणां मुख्योऽर्थो न घटते। अन्यथैकस्यैव मन्त्रस्यानेके विनियोगा न भवेयुः। दृश्यन्ते च विनियोगभेदाः। अन्यथा वेदे एकैकस्य मन्त्रस्यानेकवारोल्लेखेन पौनरुक्त्यमेव स्यात्। तथा 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' (गो० सू० २।१।५७) इति वेदानामप्रामाण्यमेव स्यात्।

ब्रह्मदत्तजिज्ञासुरपि यजुर्वेदभाष्ये विवरणभूमिकायां ५५ पृष्ठे दुर्गाचार्यवचनमुद्धरति—'तत्रैवं सति प्रतिविनियोगमस्यान्येनार्थेन भवितव्यम्। त एते वक्तुरभिप्रायवशात् अन्यत्वमपि भजन्ते मन्त्राः। नहि एतेषु इयत्तावधारणमस्ति। महार्था एते दुष्परिज्ञानाश्च। यथा अश्वारोहवैशिष्ट्यात् अश्वः साधुः साधुतरश्च वहति, एवमेव वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ते। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् अधिदैवाध्यात्माधियज्ञाश्रयाः सर्वे एव ते योज्याः। नात्रा-

यह जो कहा है कि—'विपरीतार्थक मन्त्र को बोलकर पशु के अङ्गच्छेदन को किया जाता है'—वह भी निःसार है। वेदबाह्यदृष्टि से जिसे हिंसा समझ रहे हैं, वस्तुतः वह शास्त्रदृष्टि से अहिंसा ही रहती है।

यह जो कहा है कि—'दधिक्राव्णोः' मन्त्र के अर्थ का अनुसरण बिना किये हो विनियोग किया जाता है—वह भी निःसार है, क्योंकि मीमांसा सिद्धान्त के अनुसार द्रव्यविषया मन्त्र प्रयोग को अदृष्टार्थ माना गया है। किञ्च, विनियोगभेद से मन्त्रों का अर्थभेद भी समाजी मानते ही हैं। ऐसे कितने ही विनियोग रहते हैं, जहाँ मन्त्रों का मुख्यार्थ घटित नहीं रहता। अन्यथा एक ही मन्त्र के अनेक विनियोग नहीं हुए होते। भिन्न-भिन्न विनियोग के लिये एक ही मन्त्र का अनेक बार उल्लेख किया गया है, फिर भी उसे पुनरुक्ति नहीं कहते हैं। पुनरुक्ति मानने पर तो वेद को अप्रमाण ही कहना पड़ेगा।

ब्रह्मदत्त जिज्ञासु ने भी यजुर्वेद भाष्य विवरण भूमिका में पृ० ५५ पर दुर्गाचार्य के वचन को उद्धृत किया है और दयानन्द ने 'तरुत्तारम्' (ऋ० सं० १।११९।१०) मन्त्र में 'तार' शब्द को देखकर उसका अर्थ 'तार' नामक यन्त्र कर दिया है। 'द्वादश

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पराधोऽस्ति ।' इति । दयानन्दस्तु 'तरुतारं' ( ऋ० सं० १।११९।१० ) इति मन्त्रे तारं दृष्ट्वा तारांख्यं यन्त्रमित्यर्थं कृतवान् । 'द्वादशप्रधयः' इति मन्त्रस्य 'षष्ठिश्च वै त्रीणि च शतानि च संवत्सरस्याहोरात्राणि, (नि० ४।२७) इत्यनेन निरुक्तकारो वर्षस्य ३६० दिनानि इत्यर्थं वक्ति । दयानन्दस्तु, वायुयानस्य ३६० शङ्कव इत्यर्थं कृतवान् । सनातनधर्मे तु याज्ञवल्क्यस्मृतावाचाराध्याये ग्रहशान्तिप्रकरणे ( १ ) आकृष्णेन, ( २ ) इमं देवा, ( ३ ) अग्निर्मूर्धा, ( ४ ) उद्बुध्यस्वेति ऋचो यथासंख्यं प्रकीर्तिताः । ( ५ ) बृहस्पते अति यदर्यः, ( ६ ) तथैवान्नात्परिस्रुतः, ( ७ ) शन्नोदेवी तथा ( ८ ) काण्डात् ( ९ ) केतुं कृण्वन्निमास्तथा ॥ इति विनियोग उक्तः ।

वेदेऽपि ग्रहाणां वर्णनं दृश्यते—'शन्नोग्रहाश्चान्द्रमसा शमादित्यश्च राहुणा । शं नु मृत्युर्धूमकेतुः' ( अथर्ववे० सं० १९।९।१० ) 'शन्नो दिविचरा ग्रहाः' ( अथर्ववे० सं० १९।८।७ ) इतिप्रमाणदर्शनात् ।

'द्रष्टृप्रवक्तृसामान्याच्चानुमानम् । धर्मशास्त्रस्याप्रामाण्यानुपपत्तिः ।···य एवाप्तावेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यम्' (न्या० द० वात्स्यायनभाष्य २।१।६८) । भगवद्दत्तोऽपि 'वैदिकवाङ्मय का इतिहास' ग्रन्थे १८० पृष्ठे आह—'वही ऋषि ब्राह्मण का प्रवचन करते हैं, वही याज्ञवल्क्यादि स्मृति का निर्माण करते हैं' इति । तत्रैव ग्रन्थे ७३ पृष्ठे स उपर्युद्धृतं वात्स्यायनमुनिवचनमपि उद्धृतवान् । तस्मात् पुराणादिप्रोक्तोऽपि विनियोग आदरणीय एव ।

बृहत्पराशरस्मृतौ च (९।६४) 'आकृष्णेनेति तीव्रांशोरिमं देवा निशाकरम् ।' इत्यादिना विनियोगा उक्ताः । तथैव मत्स्यपुराणे—'आकृष्णेनेति सूर्याय होमः कार्यो द्विजन्मना' ( मत्स्यपु० ९३।३३ ) । एवमेवान्यत्रापि दृश्यते विनियोगः । अर्थोऽपि तत्र सङ्गच्छत एव, तद्यथा शन्नोदेवीरिति । तत्रेदं ज्ञातव्यम्—ग्रहाः पञ्चतत्त्वात्मका भवन्ति । तत्र अप्तत्त्वप्रधानः शनिः । शन्नोदेवीरित्यत्रत्य 'आप' इत्यस्यार्थः जलमिति । जलस्य शनेश्च सूर्यादुत्पन्नत्वात् । तत एव शनैश्चरो मन्द उच्यते । अपां शीतस्पर्शवत्त्वेन शनेरालस्यवत्त्वात् मन्दगामित्वम् । शीतं करोतीतिशीतकः अलसः । मन्दगत्या स एकराशौ सार्धद्वयवर्षं यापयति । शनैश्चरस्य गतिमान्द्य तस्य परिधिमहत्त्वमिति तु प्रकारभेदः । 'अग्नेरापः' इति तेजसो जलोत्पत्तिरुक्ता । इदमेव शनैश्चरस्य सूर्यपुत्रत्वम् । बृहत्पराशरहोराशास्त्रे २९ पद्ये 'कूर्मो भास्करपुत्रस्य' इति शनेः कूर्मरूपत्वमुक्तम् । के जले ऊर्मिर्गतिर्यस्य स कूर्मः । के जले मठः स्थानं यस्य स कमठः । तत्र संस्थानैकत्वेन संभोगैकत्वञ्च उपेक्षितव्यम् ( उपपत्तित ईक्षितव्यम् ) यथा पृथिव्यां मनुष्याः पशव इति सहस्थानतयैकत्वम्, सम्भोगः इतरेतरोपकारित्वम् समानकार्यता । सा पुनः भिन्नस्थानानामपि भवति किमङ्ग पुनः समानस्थानानाम् ? यथा पृथिव्याः पर्जन्येन वाय्वादित्याभ्याञ्च । सम्भोगः पृथिवी ओषध्युत्पत्तौ पर्जन्यवाय्वादित्यकृतमुपकारमपेक्षते । अतोऽप्शब्देन शनैश्चरग्रहणं सर्वथा युक्तमेव । सूर्यवत् शनिरपि वृष्टिकर्ता प्रोच्यते । 'त्रिधावृष्टिः शनैश्चरे' इति ज्यौतिषम् । तथा चापो देव्यः अब्रूया देवता नः शं कल्याणं कुर्वन्त्विति प्रार्थनायुक्तैव । यदि मन्त्रप्रभावेण पाषाणा देवप्रतिष्ठया देवप्रतिमा भवन्ति तदा कल्पप्रवक्तॄणां विनियोगानुसारेण मन्त्रेषु शनैश्चरग्रहस्य प्रतिष्ठा कथं न स्यात् ? अत्र गृह्यसूत्र-स्मृतिपुराणादीनाम् ऐकमत्यमेव । सर्वेऽप्येते शन्नो देवीरिति शनिमन्त्रं मन्यन्ते । यस्तु अप्रमत्तगीतः स प्रमाणम् इति महाभाष्यरीत्या शन्नो देवीरिति मन्त्रः शनिपरः सम्भवत्येव ।

प्रधयः' इस मन्त्र का अर्थ ( नि० ४।२७ ) निरुक्तकार ने तो 'वर्ष के ३६० दिन' किया है । किन्तु दयानन्द ने 'वायुयान के ३६० शंकु' अर्थ किया है । सनातन धर्म में तो याज्ञवल्क्य स्मृति के आचाराध्याय के ग्रहशान्ति प्रकरण में ( १ ) आकृष्णेन, ( २ ) इमं देवा, ( ३ ) अग्निर्मूर्धा, ( ४ ) उद्बुध्यस्व ( ५ ) बृहस्पते अति यदर्यः, (६) अन्नात् परिस्रुतः, ( ७ ) शन्नो देवी, (८) काण्डात्, ( ९ ) केतुं कृण्वन्' आदि ऋचाओं का ग्रहों के शान्त्यर्थ यथासंख्य ( यथाक्रम ) विनियोग बताया गया है । वेद में भी ग्रहों का वर्णन उपलब्ध

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बुधोऽग्नितत्त्वप्रधानः। अत एव अग्निसम्बद्धमन्त्रो बुधमन्त्रः। अत्रापि याज्ञवल्क्य-बृहत्पराशर-बोधायनगृह्यशेष-सूत्रवैखानसगृह्यसूत्राग्निवेश्यगृह्यसूत्र-भविष्यपुराणादिरीत्या 'उद्बुध्यस्वाग्ने' ( वा० सं० १५।५४ ) इति बुधमन्त्रः। मत्स्य-पुराणरीत्या 'अग्ने विवस्वदुषसः' इत्यग्निमन्त्रो बुधमन्त्रः। तत एव बुधस्य शीघ्रगतित्वम्। अतो यत्रैकराशौ शनिः सार्धं-द्वयवर्षं यापयति तत्र बुधः २१ दिनं यापयति। ऐतरेयारण्यके 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ( ऐ० आ० २।४।२४ ) इत्यग्नि-रूपो बुधो वागधिष्ठाता भवति। 'वाचां बह्लेर्मुखं क्षेत्रम्' ( श्री० भा० म० पु० २।६।१ ), 'वाच्यग्निः ( म० १२।१२१ ), बृहत्पराशरहोराशास्त्रे—'बुधो वाणीप्रदायकः' इत्युक्तम्। बुद्धिप्रदायकत्वाद् गायत्र्यग्निरूपाभ्युपेयते। अग्नेः सकाशान्मेधा-प्रार्थ्यते। 'यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य मेधयाग्ने'......५

तथैव केतुरपि ग्रहः। उणादिकोषे ( १।७४ ) केतुर्ग्रहः पताकावेति दयानन्दः। तथैव उज्ज्वलदत्तोऽपि। दशपाद्यामुणादिवृत्तौ ( १।१२६ ) केतुर्ध्वजो ग्रहश्चेति। उणादिश्च दयानन्ददृष्ट्या वेदाङ्गभागः। यदि तस्य वेदाङ्ग-निर्दिष्टकेतोर्बोधकः 'केतुं कृण्वन्निति मन्त्रो नास्ति कथं तर्हि वेदाङ्गे तदुल्लेखः? एवमेव 'शमादित्यश्च राहुणा शन्नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः' ( अथर्व० १९।९।१० ) इत्यथर्ववेदे राहोः केतोश्च वर्णनं स्पष्टं दृश्यते। दयानन्दाभिमते वेदप्रकाशे उणादिप्रकरणे 'दृशजनि''''''रहिभ्यो गुणः' (उ० १।३ ) इत्युणादिटीकायां राहुर्ग्रहविशेषः, केतुर्ग्रहः पृष्ठ १८ इति। यदि वेदे च तन्नामोल्लेखस्तदा 'राहोश्छायास्मृतः केतुः' इत्यादिशास्त्रानुसारेण 'राहुः केतुश्च कुतो न ग्रहौ स्यातामिति।

अपिच, मन्त्रे केतुशब्दस्य पताकार्थत्वेऽपि राहु-केतुग्रहसिद्धिरनिवार्यतया सिद्ध्यति। लिङ्गेनापि लिङ्गिनो व्यपदेशः सम्भवति, दण्डी दण्डेन व्यपदिश्यते, छत्रिणश्छत्रेण। अद्यत्वे व्यवहारे लघुशकट्या जीवन्तः 'ओ रिक्शे ओ, ताङ्गे' इति सम्बोधनेन आहूयन्ते। केतुग्रहस्य रूपं पताका प्रसिद्धा। केतुस्तस्य लिङ्गम्। केतोराकृतिरपि तथैव निर्मीयते। जैमिनीयगृह्यसूत्रे—'अथाकारा' इत्युक्त्वा 'केतोर्ध्वजम्' ( २।९ ), 'केतवे ध्वजम्' ( बोधायनगृह्यसूत्रे ( १।१६।५ ) इति बोधायन''''गृह्यसूत्रोक्तेः। पञ्चाङ्गेष्वपि तथैव ग्रहाकारा दृश्यन्ते। तथा च केतुवर्णनेन केतु-लिङ्गस्य केतुग्रहस्य प्रतिपादनं नानुपपन्नम्। केतुग्रहस्य दयानन्दरीत्यापि वैदिकत्वसिद्धेः। अद्यत्वे ध्वजस्य पूजया राष्ट्रमेव पूज्यते, तिरस्कारेण च तिरस्क्रियते। यद्वा केतुं कृण्वन्निति मन्त्रस्य देवता अग्निः। बृहत्पराशररीत्या 'केतुं कृण्वन्नग्निसूनोः' ( वृ० प० स्मृ० ९।६६ ) अग्निसूनुः केतुरप्यग्निस्तुत्या स्तूयत एव, 'आत्मा वै पुत्रनामासि' इति श्रुतेः। अग्निरपि धूमकेतुरित्युच्यते। अग्निपुत्रस्य केतोरपि तमोमयं रूपम्। केतुस्तु राहोश्छायारूपः। अत एव सप्तमराशौ राहोः सम्मुखे तिष्ठति। तदर्थं मन्त्रकल्पनमयुक्तमित्यपि निरस्तम्, केतो राहुभिन्नदिक्स्थत्वेन षड्राशि-व्यवहितत्वेन च पृथग्ग्रहत्वसिद्धेः। एकवस्तुव्यवधानेन छायासम्भवात्। अत एव ग्रहणमपि कदाचिद्राहुणा कदाचित् केतुना च भवति। पौर्णमास्यां चन्द्रः सूर्यात् षड्राशिव्यवधानेन तिष्ठति, तेनैव च प्रकाश्यते, तस्य स्वीयप्रकाशाभावात्। दयानन्देनापि राहोः पृथक् केतोरङ्गीकारात्, एकत्वे नामभेदस्यायुक्तत्वात्। अत एव शिरोभागो राहुः शेषः कबन्धभागः केतुः। 'कयानश्चित्र आभुवत्' इति 'राहुमन्त्रः। 'अग्निर्मूर्धादिवः' ( वा० सं० ३।१२ ) इति भौममन्त्रः। नामशब्द-सादृश्यात्तत्कल्पनम्। तस्मात् क्वचिद् ग्रहस्य गुणानुसारेण मन्त्रसम्बन्धः, यथा शनिबुधयोः। क्वचिल्लिङ्गदर्शनेन

होता है। वेद और धर्मशास्त्रों ( स्मृतियों ) के द्रष्टा तथा प्रवक्ता समान ( एक ) रहने से धर्मशाखा को अप्रमाण भी नहीं कहा जा सकता। इस वक्तव्य का समर्थन न्यायदर्शन के भाष्यकार वात्स्यायन महर्षि ने किया है। भगवद्दत्त ने भी 'वैदिक वाङ्मय का इतिहास' ग्रन्थ के १८० पृष्ठ पर इसका समर्थन करते हुए पृ० ७३ पर उपर्युक्त वात्स्यायन मुनि का वचन भी दिया है। अतः पुराणादिप्रोक्त

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यथा भौमकेत्वोः। क्वचिच्च ग्रहदेवतामभिलक्ष्य मन्त्रसम्बन्धः। यथा दयानन्देन नामकरणसंस्कारे तिथीनां नक्षत्राणां च देवता लिखिताः। तथैव ग्रहाणामपि देवता, अधिदेवताः, प्रत्यधिदेवताश्च भवन्ति। 'आकृष्णेन रजसा' (वा० सं० ३३।४३) इति सूर्यमन्त्रः प्रसिद्ध एव। इमं देवा.... विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा' (वा० सं० ९।४०) इति मन्त्रेण चन्द्रसम्बन्धोऽपि स्पष्ट एव। अनेन मन्त्रेण ब्राह्मणः क्षत्रियस्य राज्ञो राज्याभिषेकं कुर्वन् वदति, एष वो राजा। अस्माकं ब्राह्मणानां तु सोमो राजा। सोमपदेन सोमरसो गृह्यते। तस्याधिपतिश्चन्द्रमाः। अमरकोष (१।३।१५) रीत्या चन्द्रमा द्विजराज उच्यते। गृह्यसूत्रकारैरस्य मन्त्रस्य सोमपूजायां विनियोग उक्तः। 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपांसि रेतांसि जिन्वति॥' (वा० सं० ३।१२) इति भौमसम्बन्धः, स च भूमेरंशोऽभिप्रेयते। अत एव पृथिव्या अयं पतिरिति तत्सम्बंधः सूच्यते। अत्यन्ततेजोरूपत्वाद्रक्तत्वाच्चाग्निवर्णत्वं तस्य स च दिवः ककुद् आकाशस्य भूषणम्। अपां पतिः 'चलत्यङ्गारके वृष्टिः' इति ज्यौतिषप्रसिद्धेश्च। यथा निरुक्ते (३।११) कुत्सस्य ऋग्वेदसम्बन्धे वधार्थककृतीधातोश्चारितार्थ्यमुक्तम्। यद्यपि तस्मिन् वधकर्तृत्वं नास्ति, तथापि तत्सख्युरिन्द्रस्य शुष्णासुरवधकर्तृत्वेन तत्रापि तदुपचारः। 'बृहस्पतेरति यदर्यो' (वा० सं० २६।३) इति मन्त्रेण बृहस्पतिसम्बन्धोऽपि स्पष्ट एव। सर्वापेक्षया बृहत्त्वात् तस्य बृहस्पतित्वमपि सङ्गच्छते। 'वाग् हि बृहती तस्या एष पतिः' (छा० उ० १।२।११) इति स वाचामधिष्ठाता। 'कुक्कुट्यादीनामण्डादिषु' (पा० सू० वा० ६।३।३५) इति पुंवद्भावः। ज्यौतिषशास्त्रे बृहस्पतेर्विद्याधिष्ठातृत्वमुक्तम्। एवमेव—'ऋतेन सत्यमिन्द्रियं विपानं शुक्रम्' (वा० सं० १९।७५) इति शुक्रमन्त्रः। सोऽयं विशिष्टदीप्तिमत्त्वात् शुक्रः शुक्लो वा उच्यते। तेन लिङ्गेनात्र लिङ्गी ज्ञाप्यते।

अन्ये तु 'असितः शनिग्रहः' इति हलायुधकोषरीत्या शनिरसितपदेन व्यपदिश्यते। असितः कृष्णसर्पोऽपि गद्यते। शनेश्चतुर्दिक्षु कुण्डलवत्परिधिदर्शनात् कृष्णसर्पतुल्यत्वात् शनिरसित उच्यते। तस्य च वर्णनम् 'अमु दुमा'उ अंशवे हिरण्यं प्रतिसूर्यम् व्यख्यज्जिह्वया सित' (ऋ० सं० १।४९।१०) यदा सूर्यं उत्पद्यते किरणप्रसारणार्थं देदीप्यमानो भवति, तदा शनिग्रहो जिह्वया सार्धं प्रख्यायते। अत्र सूर्यात् शनेः प्राकट्यमुक्तम्। अत एव ज्योतिषशास्त्ररीत्या शौरिपदेन शनेर्बोधनं दृश्यते।

राहुसम्बन्धेन मन्त्रद्वयं प्रसिद्धम् (१) 'काण्डात्काण्डात् प्ररोहन्ती', (२) 'कयानश्चित्र आभुवत्' इति च। उदुम्बरः, शमी, दूर्वाः, कुशाश्च समिधः क्रमात्।' इति याज्ञवल्क्यस्मृतिरीत्या दूर्वा राहुहोमद्रव्यम्। 'यद्देवतः स यज्ञो यज्ञाङ्गं वा तद्देवता भवन्ति' (नि० ७।४) इति यास्करीत्या यस्मिन् यज्ञे यज्ञाङ्गे वा ते अनाविष्कृतदेवतालिङ्गा मन्त्रा विनियुज्यन्ते ते तद्देवता भवन्ति। किञ्च, मन्त्राणां द्रव्यदेवतास्मारकत्वपक्षेऽपि दधिशब्दः समुदायप्रसिद्ध्या दध्न एव स्मारको भवति। दधाति धारयति नरमिति दधिः। दधिः सन् क्राम्यतीति दधिक्रावा। अस्याश्वबोधकत्वं त्ववयवव्युत्पत्त्या योगाद्रूढिर्बलीयसीति न्यायात्। आर्षविनियोगबलाद् दध्ना दधिभक्षणजन्येन वीर्येण क्राम्यतीति दधिक्रावा अश्वो भवतु। दधिशब्दे दध्नोऽपि वर्णनं जातमेव। किञ्च, 'दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः सुरभि नो मुखाकरत्॥' इति मन्त्रो मेध्यस्याश्वस्य बोधकः। स चाश्वमेधीयोऽश्वः कालात्मा प्रजापतिरूपेण स्तूयते। 'उषा वा मेध्यस्याश्वस्य शिरः' (बृ० उ० १।१।१) प्रजापतिश्च सर्वात्मत्वात् सर्वदेवतारूपत्वाच्च सर्वरूप इति तन्मन्त्रेण दधिद्राप्साप्राशनमपि कथं न सम्बद्ध्येत ?

यथा—'आग्नेयोऽग्निष्टोम' इति श्रूयते। तत्र योऽनाविष्कृतलिङ्गो मन्त्रः स्यात् स आग्नेय एव भवति। प्रातः-

विनियोग का आदर करना ही होगा। यदि मन्त्र के प्रभाव से पाषाण भी देव प्रतिमा बन जाते हैं, तो कल्पप्रवक्ता ऋषियों के बताये विनियोगानुसार मन्त्रों में ग्रह की प्रतिष्ठा क्यों नहीं हो सकेगी। इस विषय में गृह्यसूत्र, स्मृति, पुराणादि का एक मत है। सभी लोग

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सवने यज्ञाङ्गे यो विनियुज्यते स आग्नेयः। यो माध्यन्दिने स आदित्यः। यद्दैवतप्रधानं हविः स तद्दैवतो युक्त एव। व्याख्यान्तरे यद्दैवतं प्रधानं हविस्तद्दैवतो भवति। तद्यथा प्रकृतौ 'ऐन्द्रं सांनाय्यं माहेन्द्रं वा' (तै० सं० २।५।३।४) तत्संस्कारपरा इषे त्वादयो मन्त्रा ऐन्द्रा भवन्ति, तथैव दूर्वाया राहोर्हविष्ट्वेन दूर्वाप्रतिपादकमन्त्रस्य राहुदेवताकत्वं सुतरां सिद्ध्यति। 'कया नश्चित्र' इति मन्त्रस्तु शिष्टाचारपारम्पर्येण राहौ विनियुज्यते। 'शन्नो ग्रहाश्चान्द्रमसाः शमादित्यश्च राहुणा' (अथर्व १९।९।१०) इति मन्त्रेण राहोः सकाशात् कल्याणस्य प्रार्थितत्वात् कया न इति मन्त्रस्य इन्द्रो देवता। 'इन्द्रः सर्वा देवता' (श० ३।४।२।२) इति प्रमाणेनेन्द्रस्य सर्वदेवतात्मकत्वेन राहुरप्यस्य मन्त्रस्य देवता सिद्धयति। 'माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' (नि० ७४) इति यास्कोक्तेः।

यद्यपि केतू राहोच्छायात्वेनोक्तस्तथापि न तयोरभेदः, षड्भी राशिभिर्व्यवहितत्वात्। अतश्छायावत्तदनुसारित्वमेव केतोर्मन्तव्यम्। एवं नवग्रहमन्त्राणां ग्रहैः सम्बन्धः स्पष्टं सिद्धयति। अर्थसम्बन्धाभावेऽपि यथा श्रुतिबलाद् गार्हपत्याग्नौ ऐन्द्र्या विनियोगो भवति, तथैवाश्वलायनकात्यायनाद्यार्षविनियोगबलादपि विनियोगो भवत्येव। अन्यथा एकमन्त्रस्यानेके विनियोगा न दृश्येरन्। दृश्यन्ते चानेके विनियोगाः। 'शनिराहुकेतूरगरक्षो' (मैत्रायणीयारण्यक ७।६) इति मैत्रायणीयारण्यके शनिराहुकेतूनां वर्णनं दृश्यते। कल्पो वेदाङ्गभूत इति न तस्याधुनिकत्वम्, तथात्वेऽङ्गिनो वेदस्यापि तथात्वापत्तेः। 'इतिहासपुराणस्यापि त एव स्मर्तारो ये मन्त्रब्राह्मणात्मकस्य वेदस्य प्रवक्तारः' इति वात्स्यायनवचनात् तदुक्तविनियोगोऽप्यादरणीय एव। किञ्च, ये समाजिनो नामकरणसंस्कारे तिथिनक्षत्रदेवताभ्यस्तदनुसारीणि हवींषि ददति, न तद्विनियोगो वेदे दृश्यते। तथात्वे च तदवैदिकत्वमेव स्यात्। अथर्ववेदीयसायणभाष्योपोद्घातरीत्या अथर्ववेदस्य नवसंहितानां मध्ये षण्णां संहितानां विनियोगा नक्षत्रकल्पादिषु पञ्चसु सूत्रग्रन्थेषूक्ताः। 'नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः। तुर्य आङ्गिरसः कल्पः (आभिचारिकः) शान्तिकल्पस्तु पञ्चमः॥' (वायुपुराण ६१।५४) उपवर्षप्रणीतकल्पसूत्राधिकरणे पञ्चसूत्रानुसारिणो विनियोगा उक्ताः। तत्र नक्षत्रकल्पानुसारेण नक्षत्राणां शान्तयः पूजाश्चोक्ताः। वैतानसूत्रे दर्शपूर्णमासाग्न्याधानादिविधानान्युक्तानि। संहिताविधि (कौशिक) सूत्रे शत्रूच्चाटनभूतप्रेतपिशाचबालग्रहापसारण-पाप-नक्षत्रोत्पत्तिशान्ति-अपशकुनशान्ति-आभिचारिककर्म-परकर्तृकाभिचारनिवृत्तिप्रभृतीनि कर्माण्युक्तानि। चतुर्थे आङ्गिरसकल्पेऽभिचारकर्मणां स्वातन्त्र्येण निरूपणं तन्निवारणविधयश्चोक्ताः। पञ्चमे शान्तिकल्पे विनायकपूजा-ग्रहपूजा-ग्रहयज्ञादयो वर्णिताः। तथैवाथर्ववेदीये नक्षत्रग्रहोत्पातलक्षणे ग्रन्थे च ग्रहनक्षत्रादिशान्तय उक्ताः। तेषु ग्रहाणां पूर्वोक्ता एव मन्त्रा वर्णिताः। तदनुसारेणैव स्मृतिष्वपि ते ते मन्त्रा ग्रहाणामुक्ताः। नाधुनिकत्वकथनेन ततः पिण्डमोचनं सम्भवति। अथर्ववेदीयशौनकसंहितायाम्—'सुहवमग्ने कृत्तिका रोहिणी चास्तु भद्रं मृगशिरः शम् आर्द्रापुनर्वसू सूनृता चारु पुष्यो भानुराश्लेषा अयनं मघा मे पुण्यं पूर्वाफाल्गुन्यौ चात्र हस्तः चित्रा शिवा स्वातिसुखो मे अस्तु राधे विशाखे सुहवानुराधा ज्येष्ठा स नक्षत्रमरिष्टमूलम् अन्ना पूर्वा रासतां मे अषाढा ऊर्जं देवी उत्तरा आवहन्तु अभिजित् मे रासतां पुण्यं मे श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिम् आ मे महत शतभिषक् वरीय आ मे द्वया प्रोष्ठपदा सुशर्म आ रेवती अश्वयुजौ भगं मे आ मे रयिं भरण्य आवहन्तु' (अथर्व० १९।७।५) इति प्रमाणेन नक्षत्रादीनि सिद्धयन्ति। 'यज्ञो मन्त्रब्राह्मणस्य विषयः' (वात्स्यायनभाष्य, गो० सू० ४।१।६२), 'चत्वारो वेदास्तैर्यज्ञस्तायते' (गो० ब्रा० १।४।२४), 'दुदोह यज्ञसिद्धयर्थमृग्यजुःसामलक्षणम्' (म० १।१३), 'एदमगन्म देवयजनम्'.......'ऋक्सामाभ्यां सन्तरतो यजुर्भिः।' (वा० सं० ४।१), 'वेदे मन्त्रा अवश्यं यज्ञगतेन यथायथं विपरिणमयि-

'शन्नो देवी' मन्त्र को शनि का मन्त्र मानते हैं। 'यस्तु अप्रमत्तगीतः स प्रमाणम्' इस महाभाष्य के अनुसार 'शन्नो देवी' मन्त्र का शनिपरक होना सम्भव हो ही सकता है। इसी तरह तत्तन्मन्त्रों का विनियोग तत्तद् ग्रहों के लिये जो होता आ रहा है, वह उचित ही है। उसी



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तव्याः। याज्ञे कर्मणि स वेदप्रोक्तो नियमः।' (म० भा० पस्पशाह्निकम्) इत्यादिरीत्या वेदानां यज्ञो मुख्यो विषयः। यज्ञशब्दश्च यजधातोर्निष्पद्यते। यजधातुश्च देवपूजार्थकः। 'यज्ञे यज्ञे समर्त्यो देवान् सपर्यति (पूजयति) (अथर्व० १०।९३।२)। सूर्यचन्द्रादयश्च वेदानुसारिण्यो देवताः। तस्माद् वेदे देवपूजासत्त्वेन ग्रहपूजापि सुतरां सिद्ध्यति। वेदमन्त्रै-र्विना कश्चिद्विधिर्नास्ति द्विजन्मनाम्।' (बृ० परा० स्मृति० ९।६७) इति रीत्या वेदमन्त्रमन्तरा न काचन पूजा सम्भवति। तस्माद् ग्रहसम्बन्धिनो मन्त्रा अवश्यं मन्तव्याः। 'यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद्वषट्करिष्यन्निति ह विज्ञायते।' इति देवताध्यानं यज्ञेऽपेक्षितम्। मन्त्राश्च हविर्दानेऽपेक्ष्यन्ते, 'पुराणं यजुषा सह। उच्छिष्टाज्जज्ञिरे सर्वे....'। (अथर्व० ११।९।२४)। इति पुराणानामप्यनादित्वमेव मन्तव्यम्। व्यासस्तु प्रतिद्वापरं पुराणानामाविर्भावमेव करोति। 'पुरापि नव' इति पुराणशब्दव्युत्पत्तिः प्रसिद्धा। पुराणेषु ग्रहाणां पूजादिकं विस्तरेणोक्तम्। शिवमहापुराणरीत्या शिवं प्रति पार्वतीवचनम्—'दक्षकन्या यदाहं वै पित्रा दत्ता यदा तव। यथोक्तविधिना तत्र विवाहो न कृतस्त्वया॥ न ग्रहाः पूजितास्तेन दक्षेण जनकेन मे। ग्रहाणां विषयस्तेन सच्छिद्रोऽयं महानभूत्॥' (शिवमहापुराणे रुद्रासंहितायां पार्वतीखण्डे २९।१२-१३) इति ग्रहपूजावैधुर्यनिमित्तकमनर्थपारम्पर्यम् ईश्वरेष्वपि प्रतिफलति।

'नक्षत्राणि च सर्वाणि ग्रहाश्च सह देवतैः'। पान्तु त्वां पुत्र....।' (वाल्मीकीयरामायणे अयोध्याकाण्डे २५ १४) 'ग्राह्या ग्रहाः संसृज्यन्ते स्त्रिया यन्म्रियते पतिः'। (अथर्व ११।२।३९) इत्यथर्ववेदे ग्रहाणां ग्राह्या विशेषदशायोगे स्त्रिया वैधव्यमुक्तम्। 'शन्नो दिविचरा ग्रहाः' (अथर्व० १९।९।७) तस्माद् ग्रहपूजा वैदिकी, तन्मन्त्रा अपि वैदिका एव पूर्वोक्ताः।

### देवयोनिः

ननु 'विद्वांसो वै देवाः' विद्वांसो मनुष्या एव देवा इति चेन्न, 'देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।' (भगवद्गी० ३।११) इति श्रीमद्भगवद्गीतायां मनुष्यभिन्नानां देवानां स्मरणात्। 'विश्वेदेवा अमर्त्याः' (वा० सं० २१।१७) इति मनुष्येभ्यो भिन्नानां देवानां सत्त्वावगमात्। 'सु प्रावीरिन्द्र मर्त्यस्तवऊतिभिः' (अथर्व० २०।२५।१) हे इन्द्र, मर्त्यस्तव ऊतिभिः रक्ष्यते। 'इन्द्र ओजिष्ठस्त्वं देवेषु असि ओजिष्ठोऽहं मनुष्येषु भूयासम्' (वा० सं० ८।३९) अत्रापि भेदो विज्ञायते। न चाभेदे (च), (वा), (उत) शब्दा भवन्ति। 'अमृतानामुत मर्त्यानाम्, (ऋ० सं० १०।३३।८), 'देवेषु उत मानुषेषु' (ऋ० सं० ६।१५।१३), 'यं देवा उत मर्त्यासः' (ऋ० सं० ८।४८।१) 'मानुषीणां विशां देवीनामुत' (अथर्व० २०।११।२), 'देवानामुत मानुषाणाम्' (अथर्व ४।३०।३), 'यस्मिन् देवा अमृजत यस्मिन् मनुष्या उत' (अथर्व०

तरह तत्तद् ग्रहों के शान्त्यर्थ जो जो द्रव्य बताये गये हैं, वे भी युक्तियुक्त ही हैं। उसमें वैज्ञानिक रहस्य सुरक्षित है। इस विषय में विस्तृत विवेचन पढ़ने की इच्छा हो तो ऊपर दिये गये महाराज श्री के संस्कृत विवेचन में पढ़ सकते हैं। तस्मात् नवग्रह पूजन वैदिक हैं और तत्तन्मन्त्र भी वैदिक हैं।

### देवयोनि

कुछ लोग कहते हैं कि 'विद्वांसो वै देवाः' विद्वान् ही देव हैं। किन्तु यह कहना ठीक नहीं है, क्योंकि श्रीमद्भगवद्गीता में (३।११) श्लोक के द्वारा देवों को मनुष्य से भिन्न बताया है। उसी तरह वाजसनेयी संहिता (२१।१७), अथर्ववेदसंहिता (२०।२५।१) में भी देवों को मनुष्य से भिन्न बताया है। यह जो कहना है कि अभेद को बताने के लिये 'च', 'वा', 'उत' शब्दों का प्रयोग किया जाता है, वह भी ठीक नहीं है, क्योंकि 'अमृतानामुत मर्त्यानाम्' (ऋ० सं० १०।३३।८), 'देवेषु उत मानुषेषु' (ऋ० सं० ६।१५।१३), 'यं देवा उत मर्त्यासः' (ऋ० सं० ८।४८।१), 'मानुषीणां विशां देवीनामुत' (अथर्वसं० २०।११।२), 'देवानामुत मानुषाणाम्' (अथर्व०सं० ४।३०।३) इत्यादि सभी स्थलों में सर्वत्र 'उत' शब्द से भेद को ही बताया गया है। 'देवो वा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१२।२।१७ ) इत्यादिषु सर्वत्र 'उत' इति शब्दप्रयोगेण भेदो बोध्यते। 'देवो वा मानुषो वा त्वम्' (वा० रा० २।१२।४३) नहि समानजातीयानां निर्देशे 'च' 'वा' दयः शब्दाः प्रयुज्यन्ते। चकारप्रयोगो यथा—'यत्र देवाश्च मनुष्याश्च' (श० २।३।४।४)। 'दैवीश्च विशो मानुषीश्च' ( वा० सं० १७।८६ )। 'तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या देवानां या च मनुष्याणाम्' ( नि० १३।९ ), 'ये च देवा असुरा ये च मर्त्याः' एवमेव 'पुनर्वै देवा अददुः पुनर्मनुष्या अददुः' (अथर्व० ५।१७।१०)। अत्र पुनः शब्दोऽपि द्विरुच्चरितस्तेषां भेदं बोधयति। तथैव 'वा' शब्दद्वयमपि। यथा—'देवस्य वा मरुतो मर्त्यस्य 'वा' ईजानस्य' ( ऋ० सं० ६।४८।२० ), 'चक्षुर्वै देवानामुत मर्त्यानामित्युभयेषां ह एतद्देवमनुष्याणां चक्षुः' ( श० ९।२।३।२८ ) एवमेव नहिशब्दद्वयेनापि भेदः। यथा 'नहि त्वा शूरदेवा न मर्तासः दित्सन्त' ( सामवेदसंहिता २।२।२।३ ) 'देवो न मर्त्यो' ( ऋ० सं० १०।२२।५ ) इत्यनेनापि भेदो बोध्यते। 'न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित्।' ( म० भा० उद्योगपर्व ३५।२० ), 'न ते वर्तासि राधस इन्द्र देवो वा मर्त्यं' (अथर्व २०।२७।४), 'देवा मृत्युमुपाघ्नत' ( अथर्व० ११।५।१९ ), 'अमृता देवाः' ( श० २।१।३।४ )। यत्तु केनचित् 'नास्ति येषां यशःकाये जरामरणजं भयम्।' इति यशोऽमरत्वादमृतत्वमुक्तम्, तन्न, तादृशकविषु यशःस्वपि अमृतशब्दप्रयोगादर्शनात्। तेऽपि मनुष्या एवोच्यन्ते।

यत्तु—'अग्ने यज्ञेषु मानुषः' ( ऋ० सं० १।४४।१० ), ( ऋ० सं० १।८४।२० ), ( ऋ० सं० २।१८।१ ) इति मन्त्रेष्वग्न्यादिषु मानुषशब्दप्रयोगाद् देवत्वेनाभिमतानामपि मानुषत्वमेव' इति, तदपि तुच्छम्, तत्र मनुष्येभ्यो हितो मानुष इति तदर्थत्वात्। 'तस्मै हितम्' ( पा० सू० ५।१।५ ) इति स्मरणात्। 'सर्वे दिवि देवा दिवि श्रिताः' ( अथर्व० ११।७।२७ ), 'द्युस्थानो देवगणः' ( नि० १२।४० ) इति देवानां द्युस्थानत्वेनापि मनुष्यभिन्नत्वं सिद्ध्यति। 'दिवौकसः'। 'दिवं च पृथिवीं चान्तरिक्षमथो स्वः' ( ऋ० सं० १०।१९०।३ ) इति द्युलोकस्य पृथिव्यादिलोकाद् भिन्नत्वं स्पष्टं विज्ञायते। 'न वै देवा अश्नन्ति' ( छा० उ० ३।६।१ ), 'न वै देवाः स्वपन्ति' ( श० ३।३।२।२२ )। अत्र देवानां भोजन-स्वापराहित्येनापि मनुष्यवैलक्षण्यं विज्ञायते। 'द्राघीयो देवायुषम्' ( श० ७।३। ) 'ह्रसीयो मनुष्यायुषम्' 'तिर इव हि देवा मनुष्येभ्यः' ( श० ३।१।१।८ ) इति देवतानां मनुष्येभ्यस्तिरोहितत्वं विज्ञायते। 'मनो ह वै देवा मनुष्यस्य आजानन्ति' ( श० २।१।४।१ ) इत्यत्र देवानां मनुष्यमनोऽभिज्ञत्वमुक्तम्। नैवं मनुष्येषु सम्भवति। 'परो हि मर्त्तैरसि समो देवैः'

---

मानुषो वा त्वम्' ( वा० रा० २।१२।४३ ) यहाँ पर भी वैसे ही है। समानजातियों के निर्देश करने के लिये 'च' 'वा' आदि शब्दों का प्रयोग नहीं किया जाता। 'चकार' प्रयोग का उदाहरण, जैसे—'यत्र देवाश्च मनुष्याश्च' (श० ब्रा० २।३।४।४), 'दैवीश्च विशो मानुषीश्च' ( वा० सं० १७।८६ ), तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या देवानां या च मनुष्याणाम्' ( निरु० १३।९ ) इत्यादि अनेक उदाहरण हैं, जिनमें च, वा, उत शब्द के प्रयोग के सारा भेद का ही बोधन किया गया है।

यह जो कहा है कि—'अग्ने यज्ञेषु मानुषः' ( ऋ० सं० १।४४।१० ), ( ऋ० सं० १।८४।२० ), ( ऋ० सं० २।१८।१ ) इत्यादि मन्त्रों में अग्नि आदि के लिये 'मानुष' शब्द का प्रयोग किया गया है, अतः जो देवत्वेन अभिमत रहने पर भी उनमें 'मानुषत्व' ही मानना चाहिये, वह भी उचित नहीं है। वहाँ पर 'मनुष्येभ्यो हितो-मानुषः' यह अर्थ है। 'सर्वे दिवि देवा दिवि श्रितः' अथर्व० सं० ११।७।२७ ),द्युस्थानो देवगणः' ( नि० १२।४१ ) इन प्रमाणों से देवों का स्थान द्युस्थान बताया गया है, इस से भी स्पष्ट है कि मनुष्यों से देव पृथक् हैं। 'दिवौकसः' 'दिवंच पृथिवीं चान्तरिक्षमथो स्वः ( ऋ० सं० १०।१९०।३ ) इन प्रमाणों से भी स्पष्ट है कि पृथ्वी लोक भिन्न है। 'न वै देवा अश्नन्ति' ( छा० उ० ३।६।१ ), 'न वै देवाः स्वपन्ति' ( श० प० ३।३।२।२२ ) इन प्रमाणों से देवों का भोजन-स्वापराहित्य भी बताया गया है, इससे स्पष्ट है कि मनुष्यों से वे विलक्षण हैं। 'द्राघीयो देवायुषम्' ( श० ७।३ ) 'ह्रासीयो मनुष्यायुषम्' 'तिर इव हि देवा मनुष्येभ्यः' (श० प० ३।१।१।८) मनुष्यों से देवताओं का तिरोहितत्व बताया गया है। इत्यादि अनेक प्रमाणों से स्पष्ट है कि मनुष्यों से देवगण भिन्न हैं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

( ऋ० सं ६।४८।१९ ) अत्र पूष्णो देवस्य मर्त्यैर्भिन्नत्वं देवैरभिन्नत्वमुक्तम्। 'एको देव दयसे मर्त्यान्' ( अथर्व० १२।१।७) अत्र देवस्येन्द्रस्य मानुषानुग्राहकत्वं विज्ञायते। 'देवा वै नाकसदः' ( श० ८।६।१।१ ), 'द्यौर्वै सर्वेषां देवानामायतनम्' ( श० १४।३।२।८ ) अत्रापि देवानां द्युलोकवासित्वेन दिव्यत्वं मनुष्याणां तद्भिन्नत्वं विज्ञायते। 'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम'। अत्र वर्षस्य दिव्यत्वमुक्तम्। न च वर्षसहस्रं कस्यचिदायुर्भवति मनुष्यस्य। 'यावतीर्वै देवतास्ता वेदविदि ब्राह्मणे वसन्ति''''वेदविद्भ्यो''''नमस्कुर्याद् नाश्लीलं कीर्तयेत् एता एव देवताः प्रीणाति।' (तै० आ० २।१५) नहि ब्राह्मणे वेदविदि मनुष्या निवसन्तीति सिद्धं मनुष्येभ्यो देवानां पार्थक्यम्। 'तस्य यज्ञस्य सम्पत्त्या तुतुषुर्देवता अपि। विस्मयं परमं जग्मुः किमु मानुषयोनयः॥' (म० भा० शल्यपर्व ३८।१०) अत्र मानुषयोनयो देवताभ्यो भिन्ना उक्ताः। 'न देवा वारयन्ते न मर्ता' ( ऋ० सं० ४।१७।१९ ), 'न यस्य देवा देवता न मर्ता आपश्च न शवसोऽन्तमापुः' (ऋ०सं० १।१००।१५) अत्रापि देवमनुष्ययोर्भेदः सिद्धः। 'देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये' ( अथर्व० १०।९।९ ) अत्र देवाः पितरो मनुष्या इत्यादयो भिन्नयोनय उक्ताः। 'देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्य पितृकृतस्यैनसोऽवयजनमसि' ( वा० सं० ८।१३ ), 'पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्' ( म० १२।९४ )। 'ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा। नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्॥' ( म० ४।२१ ) इत्यादौ यजुर्वेदे मनुवचनेषु च देवानां मनुष्याणां च भेद उक्तः। 'यो देवो मर्त्यां अति' ( अथर्व० २०।१२७ ), 'प्राची देवानां दिक् उदीची मनुष्याणाम्' ( श० १।७।१।१२ ), 'देवो भूत्वा देवानप्येति' ( बृ० ४।१।२ ) अन्ते देववद्भूत्वा देवानप्येतीत्यर्थः। 'अग्ने वह हविरद्य देवान्' ( ऋ० सं० ७।११।५ ) अत्राग्नितृप्त्या देवानां तृप्तिरुक्ता। 'अग्निर्देवानां जठरम्'। ( तै० ब्रा० २।७।१२ ) न चाग्नितृप्त्या विदुषां मनुष्याणां तृप्तिर्भवति नवाग्निस्तेषां जठरं भवति। 'ऋणं देवैर्जायते' 'स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः ? ( श० १।७।२।१ ), 'अन्नहोमान् जुहोति देवानेव तत्प्रीणाति' ( श० १३।२।१।१ )। नाग्निहोमेन समाजिसम्मता विद्वांसो देवास्तृप्यन्ति, न वा तेषामृणं होमेन निवर्तते। तस्मान्न विद्वांसो मनुष्या एव देवाः। 'न ऋते त्वद् अमृता मादयन्ते' ( ऋ० सं० ७।११।१ ), 'इमं यज्ञं दिवि देवेषु धेहि' ( ऋ० सं० ७।११।५), 'अग्नौ सर्वाभ्यो देवताभ्यो जुह्वति' ( श० ३।१।३।१ ), 'देवा अग्निमुखा अन्नमदन्ति' 'अग्निर्वै सर्वा देवताः' ( श० ३।४।१।१९ ) न सर्वे विद्वांसोऽग्निरूपा न चाग्निहोमेन तृप्यन्ति। 'अमर्त्या मर्त्यां अभि नः सचध्वमायुर्धत्त' ( अथर्व० ६।४१।२ ) देवताभ्य आयुः प्रार्थ्यते न च मनुष्येषु विद्वत्स्वपि तत्सामर्थ्यम्। 'देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्।' ( वा० श० १।१।८६ ) विद्वत्सु मनुष्येषु दृश्यते। 'इन्द्राग्नीद्यावापृथिवी मातरिश्वा मित्रावरुणा भगो अश्विनोभा बृहस्पतिर्मरुतो ब्रह्मसोमं इमां नारीं प्रजया वर्धयन्तु।' ( अथर्व० १४।१।५४ ) अत्र विवाह्यमानाया नार्याः प्रजावृद्धिः प्रार्थ्यते। यदि इन्द्रादयो मनुष्या एव तर्हि ते स्वस्त्रियां सन्ताननजननाय कथं प्रार्थ्येरन् ? अत इन्द्रादयो मनुष्येभ्यो भिन्ना एव। 'उभौ लोकौ जयेयं देवलोकं च मनुष्यलोकं च' ( श० १३।२।४।१ ) "अयं वै लोको मनुष्यलोकः" तथा असौ देवलोकः' इति लोकभेदेनापि देवानां मनुष्याणां च भेदः। यदि विद्वांसो मनुष्या एव देवास्तदा लोकभेदो नोपपद्यते। 'ऊर्ध्वेभ्यः प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाः' ( श० १०।१।३।१ ) अत्रोत्पत्तिहेतु( उपादान )भेदेनापि तयोर्भेद उक्तः। 'त्रेधा भागो निहितो यः पुरा देवानां पितृणां मर्त्यानाम्। अंशान् जानीध्वं विभजामि तान्॥' ( अथर्व० ११।१।५ ) अत्रापि त्रेधापदेन तेषां भेद एव सिद्धयति। 'एव ह वै देवा ननुविद्वान् यदद्यग्निः' ( श० १।५।२।६ ) अत्र विद्वान् देवाश्च भिन्ना विभक्तिभेदेन विज्ञायन्ते। 'अग्निर्हि यत्र देवेभ्यो मनुष्यानायुषावर्तत' ( श० २।२।१।१३ ) अत्रापि भेदः। 'स यदग्नौ जुहोति तद् देवेषु जुहोति तस्माद् देवाः सन्ति, अथ यत्सदसि भक्षयन्ति तन्मनुष्येभ्यो जुहोति तस्मान्मनुष्याः सन्ति।' ( श० ३।६।२।२५ ) इत्यत्र देवानां पितृणां मनुष्याणां च भेदः स्पष्ट-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मुक्तः। 'इन्द्रस्तु यो नृवत्' ( अथर्व० २०।११।५ ), 'साधर्म्यमुपमा भेदे' ( का० प्र० ) इति काव्यप्रकाशरीत्या भेद एवोपमानं भवति। तस्मादिन्द्रादयो देवा मनुष्यभिन्ना एव।

दयानन्दोऽपि नामकरणसंस्कारे तिथिनक्षत्रदेवतानां नामभिर्हवनं विहितवान्। किं विद्वांसो मनुष्या एव देवाः? 'ननु विद्वांसो हि देवा' इति शतपथवचनेन विद्वांस एव देवा भवन्ति। 'देवा एतज्ज्ञातुमर्हन्ति' ( २।४।६२ ) 'दिव्यदृशो देवा इति' ( महाभाष्य ) अत्र 'पण्डिता इत्यर्थः' इति कैयटवचनेनापि विदुषां पर्यायवचनो देवशब्दः सत्यसंहिता देवा अनृतं मनुष्याः' ( ऐ० ब्रा० ) इति सत्यवक्ता एव देवो भवतीति चेन्न, पूर्ववचनैर्देवानां मनुष्यभिन्नत्वावगमात्। अत एवानिच्छतापि दयानन्देन तदभ्युपगमः कृतः। तथाहि सत्यार्थप्रकाशे '( प्रश्न ) स्वर्ग नरक है अथवा नहीं? ( उत्तर ) सब कुछ है, क्योंकि परमेश्वर से रचे असंख्यात लोक हैं। उनमें से जिन लोकों में सुख अधिक है और दुःख थोड़ा है, उनको स्वर्ग कहते हैं। जिन लोकों में दुःख अधिक है, सुख थोड़ा है, उनको नरक कहते हैं। जिनमें सुख और दुःख तुल्य हैं, उनको मर्त्यलोक कहते हैं।......फिर परमेश्वर के राज्य में स्वर्ग-नरक......की व्यवस्था कैसे न होगी?' ( पृ० २६४ ) और जब पुण्य अधिक करता है, पाप थोड़ा तब देवलोक और देवादि का शरीर उस जीव को मिलता है, ( नवम समुल्लास २८४ पृ० ), 'जो साक्षी सत्य बोलता है, वह जन्मान्तर में उत्तम जन्म और उत्तम लोकान्तर में जन्म को प्राप्त होता है।' ( सत्यार्थ प्रकाश, ६ समुल्लास, १०३५ ) इति।

'प्रजापतिं वै भूतान्युपासीदन् प्रजा वै भूतानि विनो धेहि यथा जीवाम इति' ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्य उपासीदन्। तानब्रवीत्। 'यज्ञो वो अन्नम् अमृतत्वं वः ऊर्ग्वः सूर्यो वो ज्योतिरिति।' ( श० २।४।२।१ ), 'अथैनं पितरः......तानब्रवीत्—मासि मासि वो अशनम् स्वधा वः मनो जवो वः' ( श० २।४।२।२ ), 'अथैनं मनुष्या तानब्रवीत् सायं प्रातर्वोऽशनम्, प्रजा वः मृत्युर्वः' ( श० २।४।२।३ ) अत्र मनुष्याणां प्रतिदिनं द्विर्भोजनं पितॄणां मासि मासि भोजनं देवानाममृतत्वं चोक्तम्। 'अथैनं पशवः अथैनं शश्वदपि असुराः, नैव देवा अतिक्रामन्ति न पितरो न पशवो मनुष्या एके अतिक्रामन्ति' ( श० २।४।२।६ ) एतेन देवमनुष्यादीनां स्पष्टं भेदो विज्ञायते। यदि मनुष्यभेदा एव देवास्तदा मनुष्यभेदा एव पशवोऽपि मन्तव्याः। 'विद्वांसो हि देवाः' इति शतपथवचनेन मनुष्याणां देवत्वसाधनं भ्रान्तिमूलकमेव, छद्म वा? 'उशिजो वह्नितमानिति विद्वांसो हि देवा एतस्मादाह उशिजो वह्नितमानिति।' ( श० ३।७।३।१० ) हि शब्दोऽत्र हेत्वर्थकः।

नामकरण संस्कार में दयानन्द ने भी तिथि नक्षत्र आदि की देवताओं के नामों से हवन करना बताया है। क्या इससे विद्वान् मनुष्य और देवता एक ही प्रतीत हो रहे हैं? जिस शतपथ के वचन और महाभाष्य तथा कैयट के वचनों को न समझपाने से भ्रमवशात् मनुष्य और देवताओं को एक समझ रहे हो, वह उचित नहीं है। क्योंकि उन वचनों से भी मनुष्यों से देवता, भिन्न ही सिद्ध हो रहे हैं। अत एव इच्छा न रखते हुए भी दयानन्द को मनुष्य और देवों में भेद मानना पड़ा। सत्यार्थ प्रकाश में वे लिख रहे हैं— '(प्रश्न) स्वर्ग-नरक है अथवा नहीं? ( उत्तर ) सब कुछ है, क्योंकि परमेश्वर से रचे असंख्यात लोक हैं। जिन लोकों में सुख अधिक है और दुःख थोड़ा है, उनको स्वर्ग कहते हैं। जिन लोकों में दुःख अधिक है, सुख थोड़ा है, उनको नरक कहते हैं। जिनमें सुख और दुःख तुल्य है, उनको मर्त्यलोक कहते हैं।......फिर परमेश्वर के राज्य में स्वर्ग-नरक......की व्यवस्था कैसे न होगी?—पृ० २६४। और जब पुण्य अधिक करता है, पाप थोड़ा तब देवलोक और देवादि का शरीर उस जीव को मिलता है, नवम समुल्लास २८४पृ०। 'जो साक्षी सत्य बोलता है, वह जन्मान्तर में उत्तम जन्म और उत्तम लोकान्तर में जन्म को प्राप्त होता है, इति। ( सत्यार्थ प्रकाश ६ समुल्लास १०३५ ) दयानन्द की इस उक्ति के विरुद्ध मनुष्य और देवों को एक समझकर दयानन्द के प्रति ये समाजी अपने विश्वास को प्रकट कर रहे हैं। शतपथ के कितने ही वचनों से मनुष्य और देवों में भेद का ज्ञान स्पष्ट हो जाता है शतपथ वचन का तात्पर्य यह है कि देवता जन्म से ही विद्वान् होते हैं, वे अविद्वान् नहीं होते। मनुष्यों में तो अविद्वान् भी होते हैं। अतः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुतस्तु 'देवान् देवीर्विशः प्रागुरुशिजो वह्नितमान् ।' ( वा० सं० ६।७ ) इति मन्त्रविवरणरूपमुक्तशतपथवाक्यम् । उशिजो मेधाविनो देवाः, कुत इत्यपेक्षायामाह—'विद्वांसो हि देवाः, तस्मादाह उशिजो वह्नितमान्' ( श० ३।७।३।१० ) । हि यतो देवा विद्वांसो विज्ञातारो भवन्ति, तस्मात् ऋषिर्मन्त्रो देवानुशिजो मेधाविन आह । अत एव वयुनानि विद्वान् इत्यत्र विद्वानित्यस्य प्रजानन्नित्यर्थं उक्तः । 'यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षम्' ( ताण्ड्यमहाब्राह्मणम् २२।१०।३ ) इति श्रुतेः । 'मनो देवा मनुष्यस्य आजानन्ति' ( श० ३।४।२।६ ), 'न तिष्ठन्ति न निमिषन्ति एते देवानां स्पश इह ये चरन्ति' ( ऋ० सं० १०।१०।८ ) एवं देवाः परोक्षा मनुष्यस्य मन आजानन्ति, तस्मात्ते, उशिज उच्यन्ते । हि यतो यत्र क्वापि मनुष्यास्तेभ्यो हविः समर्पयन्तो ध्यायन्ति तत्सर्वं दूरत एव ते जानन्ति, हविर्ग्रहणे आगच्छन्ति च । ततो विद्वद्भ्यो मनुष्येभ्यो भिन्ना एव देवाः । विद्वांसो न केवलं मनुष्याः, किन्तु पशवोऽपि, विद्वांसो ज्ञातारो भवन्ति । त्वद्रीत्या तेऽपि देवा भवेयुः । पूर्वोक्तार्थानभ्युपगमे देवशब्दस्य देवयोनिपरत्वार्थानभ्युपगमे उशिज इति निरर्थकं स्यात् । किञ्च, 'देवाः', 'उशिज' इति द्वयोरपि शब्दयोर्विशेषणत्वे विशेष्याभावापत्तिश्च । विदुषो मनुष्यान् देवीर्विशः प्रागुः' इति तदर्थोऽपि न सङ्गच्छते । 'दैवीश्च विशो मानुषीश्च' ( वा० सं० १७।८६ ), 'मानुषीणां विशां देवीनामुत' ( अथर्व० २०।११।२ ) । मानुषीणां प्रजानां तदनुगत्व-सम्भवेऽपि तद्भिन्नानां देवीनां विशां तदनुगमनासम्भवात् । तथा च शतपथरीत्या देवा जन्मनैव विद्वांसो भवन्ति । न तेऽविद्वांसो भवन्ति । मनुष्येष्वविद्वांसोऽपि भवन्ति । अतः 'विद्वांसो हि देवा, इत्यत्र देवा इति विशेष्यपदम्, 'विद्वांस' इति तेषां विशेषणम् । 'उशिज' इति मेधाविनामसु ( २४ नामनिघण्टौ १३।१५ ) । नहि मनुष्या विद्वांसो युगपत् समाह्वातॄणां मनो ज्ञात्वा गन्तुं प्रभवन्ति, अल्पज्ञानशक्तित्वात् । एक इन्द्रोऽनेकस्मिन् क्रतुशत आहूतो युगपत् सर्वत्र गतो भवति' ( महाभाष्ये १।२।६४ ) । किञ्च, यदि विद्वांसो हि देवा, इति शतपथवाक्ये विदुषां मनुष्याणां देवत्वमभीष्टं स्यात्, देवशब्दस्य विद्वत्पर्यायवाचकत्वं वा स्यात् तदा 'विद्वांसो ये शतक्रतुर्देवाः सत्रमतन्वत' ( श० ११।५।५।१२ ) अत्र विद्वांसो देवा इति पुनरुक्तिरेव स्यात् । 'यो देवस्य प्रियो विद्वान्' ( बोधायनीय गृ० सू० १।२२।१५ ) अत्र विदुषां मनुष्याणां देवत्वाद् भेद एव विभक्तिभेदः सिद्ध्यति । 'देवद्विजगुरुप्राज्ञपूजनम्' ( भ० गी० १७।१४ ) इत्यत्र तथा सत्येव पुनरुक्त्यभावः । किञ्च, महाभारते—'विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि ।' ( म० भा० आ० प० १।३४ ) अत्र पूर्वं देवानामुत्पत्तिं बोधयित्वा पुनरादित्यवस्वादीनामुत्पत्तय उक्ताः । 'ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः' ( म० भा० प० १।३५ ) । किञ्च, देव-विदुषोः पर्यायवाचकत्वे निघण्ट्वादिषु विद्वत्पर्यायवाचकेषु शब्देषु देवशब्दोऽप्यागच्छेत् । परं न च तत्रास्ति देवशब्दः । यास्केनापि क्वचिद् देवशब्दस्य विद्वानर्थं, इति नोक्तम् । तथैव विद्वानित्यस्य पर्यायरूपतया कविर्मनीषी विपश्चिदादिशब्दा आगताः परं देवशब्दश्च नागतः । देवशब्दस्य पर्यायरूपतया विद्वदादिशब्दा नागताः । कथं तर्हि—'पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् । सरस्वतीं च तां नत्वा वागधिष्ठातृदेवताम् ॥' इति महाभाष्यव्याख्याप्रारम्भे कैयटीयश्लोके देवत्वं

'विद्वांसो हि देवाः, इस वाक्य में 'देवाः' यह विशेष्य पद है और 'विद्वांसः' यह पद देवों का विशेषण है । किञ्च महाभारत में पहले देवों की उत्पत्ति बताकर पुनः आदित्य, वसु आदि की उत्पत्ति को बताया है, तदनन्तर विद्वान् शिष्ट, ब्रह्मर्षिसत्तमों की उत्पत्ति को बताया है । किञ्च देव और विद्वान् मनुष्य दोनों परस्पर पर्यायवाचक रहते तो निघण्टु में विद्वत्पर्यायवाचक शब्दों में 'देव' शब्द को भी दिया होता, किन्तु नहीं दिया । यास्क ने भी कहीं देव शब्द का अर्थ विद्वान् नहीं बताया । तथैव 'विद्वान्' शब्द के पर्यायवाचक शब्दों में कविः, मनीषी, विपश्चित् आदि शब्दों का तो उल्लेख आया है, किन्तु 'देव' शब्द का नहीं । 'देव' शब्द के पर्यायों में भी 'विद्वत् आदि शब्द नहीं आते । इसपर यदि कहें कि महाभाष्य की व्याख्या के आरंभ में कैयट के श्लोक में 'देवत्वं पाण्डित्यम्' ऐसी व्याख्या नागेश ने क्यों की ? इस प्रश्न का तो उत्तर यह है कि 'विद्वांसो वै देवाः' इस श्रुति के अनुसार यह समझना चाहिये कि देवगण स्वभाव से ही पण्डित होते हैं, देवताओं का तो धर्म ही पाण्डित्य है, उस देव-धर्म की मनुष्य (पुरुष) प्राप्त करते हैं, वे स्वयं, देवता नहीं हैं । किञ्च समाजी लोग 'विद्वान्'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पाण्डित्यमिति नागेशव्याख्यानम् ? इति, चेत् उच्यते—'विद्वांसो वै देवाः' इति श्रुतेः स्वभावत एव देवाः पण्डिता भवन्ति। पाण्डित्यं च देवधर्मः। तं देवधर्मं पुरुषाः प्राप्नुवन्ति, न तु स्वयं देवा भवन्तीति। किञ्च, समाजिनः 'विद्वान्, देवता, ब्राह्मण-इत्यादिशब्दानामपि पर्यायत्वमिच्छन्ति, तदप्यसङ्गतम्, तथात्वे 'सम्पूजयेद् देवान् ब्राह्मणांश्च' ( म० ७।२०१ ), 'देवांश्च ब्राह्मणांश्च ( श० ३।३।४।२० ), 'गां ब्राह्मणांश्च सम्पूज्य देवतामश्विनौ' ( चरके कल्पस्थाने १।१२ ) इत्यादिषु पुनरुक्ति-र्दुर्निर्वारा। यदि विद्वच्छब्देन विद्वान् मनुष्यो गृह्येत तदा ब्राह्मणा अविद्वांसो भवेयुः। अन्यथा विद्वानित्यस्य द्वयोः पर्याय-वाचकयोरुल्लेखो व्यर्थं एव स्यात्। अविदुषामपि ब्राह्मणत्वे गुणकर्मणा वर्णव्यवस्था बाध्येत। ब्राह्मणशब्दस्य विद्वत्पर्यायत्वे देवशब्दस्य विद्वत्पर्यायत्वं न स्यात्। सेयमुभयतः पाशारज्जुः। 'देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा। नाक्रामेत्काम-तश्छायां बभ्रुणो दीक्षितस्य च॥' ( म० ४।१३० ) अत्राचार्यादिपदैर्विद्वांसो विवक्ष्यन्ते। यदि देवता अपि विद्वांस एव उच्यन्ते, तदा कथं न पुनरुक्तिः स्यात् ? तस्मान्न देवशब्दो विद्वद्बोधकः। 'न मे विदुः सुरगणाः प्रभवं न महर्षयः।' ( भ० गी० १०।२ ) इत्यत्र देवपर्यायः सुरशब्दो दृश्यते। तस्यापि विद्वदर्थकत्वे महर्षिशब्दस्य मूर्खार्थकत्वमेव स्यात्। यदि देव-विद्वच्छब्दयोः पर्यायवाचकत्वमेव स्यात्तदा कथम् अमरकोषे स्वर्गवर्गे वर्णितेषु देवपर्यायेषु विद्वच्छब्दो मनुष्यवर्गस्य अवान्तरवर्गे ब्रह्मवर्गे वर्णितेषु विद्वत्पर्यायेषु च देवशब्दो न निर्दिष्टः। कामं देववाचकेषु शब्देषु विबुधादिविद्वद्बोधकशब्दा आयान्ति। एतेन देवयोनयो विद्वांसो भवन्तीत्येवायाति। परन्तु विद्वांस एव देवा न भवन्ति, उभयोः पर्यायवाचकत्वे एकत्रैव पाठस्य युक्तत्वात्। न चैकत्र देवविद्वच्छब्दयोः पाठः कोषेषु दृश्यते। तस्मान्न तयोर्वाचकत्वम्। यदि विद्वांस एव देवा भवेयुस्तदा यास्कपाणिनिपतञ्जलिप्रभृतयो देवा उच्येरन्। किन्तु ते मनुष्या एवोच्यन्ते। किञ्च, 'मनुष्यदेवाः' (श० ४।३।४।४ ) इति वचनस्य को वार्थः ? किं मूर्खविद्वानित्यर्थः स्यात् ? यदि देवशब्दस्य विद्वांसो मनुष्या इत्येवार्थ-स्तर्हि किं महादेव इत्यस्यापि विद्वान् मनुष्य एवार्थः ? 'दिव्यदृशो देवाः' इत्यत्रापि देवा दिव्यदृष्टयो भवन्तीत्येवार्थः, विशेषणविशेष्ययोः पर्यायवाचकत्वाभावात्। पण्डितशब्दस्यपि सदसद्विवेचनी बुद्धिः पण्डा, तद्वान् इत्यर्थः। 'देवा एतज्ज्ञातु-मर्हन्ति' इति मूलवाक्यसिद्ध्यर्थं 'दिव्यदृशः' इति दिव्यगर्भितविशेषणम्। अतः 'दिव्यदृश' इत्यस्यैव व्याख्या कैयटेन पण्डिता इत्यर्थं इत्युक्त्वा कृता। 'सत्यसंहिता देवा अनृतसंहिता मनुष्याः' (ऐ० ब्रा० १।६) इत्यैतरेयब्राह्मणेनापि देवाः सत्यवादिनो भवन्तीत्येवार्थः सिद्धयति। मनुष्याश्च अनृतसंहिता भवन्ति, नात्र देवा इत्यस्य पर्यायवाची सत्यसंहिताशब्दः। वैशब्द-प्रयोगेणापि पर्यायवाचकता बाध्यते। 'आयुर्वै घृतम्' (तै० सं० २।३।२।२) इति यजुर्वेदवाक्यवत्। नात्र आयुर्घृतयोः पर्याय-बोधकत्वम्। नह्यायुर्वृद्धया घृतं वर्धते। देवशब्दो विशेष्यम्, सत्यसंहिता इति विशेषणम्। अत एव सत्यवादी हरिश्चन्द्रो न देवतोच्यते। मनुष्यदेवशब्दो ब्राह्मणे प्रयुज्यते। किं तस्य सत्यासत्यवक्ता अर्थः स्यात् ? तत्र मनुष्येषु देवा इव इत्येवार्थः। अतो मनुष्ययोनेर्भिन्नैव देवयोनिर्भवति। दिवि भवत्वात्ते दिव्या अपि। परमेश्वरस्याङ्गभूता देवा उपास्या भवन्ति। माता-

देवता, ब्राह्मण आदि शब्दों को भी पर्याय कहते हैं, किन्तु वह संगत नहीं हो सकता, क्योंकि उन्हें पर्याय मानने पर 'सम्पूजयेद् देवान् ब्राह्मणांश्च' ( म० ७।२०१ ), 'देवांश्च ब्राह्मणांश्च' (श०प० ३।३।४।२०), 'गां ब्राह्मणांश्च सम्पूज्य देवतामश्विनौ' (चरक-कल्पस्थान १।१२) इत्यादि वचनों में पुनरुक्तिदोष मानना पड़ेगा। यदि 'विद्वत्' शब्द से विद्वान् मनुष्य का ग्रहण किया जाय तो 'ब्राह्मण' को अविद्वान् कहना होगा। अन्यथा 'विद्वान्' शब्द के पर्यायवाचक दो शब्दों का उल्लेख करना व्यर्थ ही होगा। अविद्वान् को भी ब्राह्मण मानने पर 'गुण-कर्मणा से वर्णव्यवस्थावाला आपका सिद्धान्त ही नष्ट हो जायेगा। ब्राह्मण शब्द को यदि विद्वत् शब्द का पर्याय कहेंगे तो देवशब्द को विद्वत् शब्द का पर्याय नहीं कह सकेंगे, इस प्रकार उभयतः पाशारज्जु से आप बँध जायेंगे अतः देवशब्द विद्वान् का बोधक नहीं है। 'न मे विदुः सुरगणाः प्रभवं न महर्षयः (श्री० भ० गी० १०।२) यहाँ पर देव का पर्याय 'सुर' शब्द दिया गया है, उसे भी यदि विद्वद-र्थक मानोगे तो महर्षि शब्द को मूर्खार्थक ही कहना पड़ेगा। तात्पर्य यह है कि मनुष्य और देवता भिन्न-भिन्न ही हैं।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भूतानि चात्मनि' (श० १३।७।१।१)। तथा विदुषो दर्शनकृता सर्वमेधसंयतं सर्वकर्मसु विज्ञायते ह्यग्निहोत्रमधिकृत्य 'स यत्सायं जुहोत्यग्निमेव तदनेन सर्वेणादित्ये जुहोत्यग्निमेवेति सर्वमनु सर्वं तद्यथानेन सकृत्सर्वं तेनेष्ट्वा लोकं जयेत तावदुहप्रातराहुत्या लोकं जयते यस्यैते आहुती''''''इत्यादिना विदुषः सर्वकर्मसु सर्वमेधः सम्यग्ज्ञानेन सम्पद्यते इत्युक्तम्। तदेव यस्मिन् कस्मिश्चित् कर्मण्यग्निहोत्रादौ सर्वः सर्वेण सर्वस्मिन् सर्वस्यैव सर्वार्थं हुत्वा आत्मानं सर्वमेव भवतीति समासार्थः। निरूढ-संज्ञात् सर्वमेधादयं सर्वमेधो भिन्नः। अहीने निरूढसंज्ञे सर्वमेधे तु त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयाप्तो-र्यामौ च भवन्ति। तत्र स 'आत्मानमप्यन्ततो जुहवाञ्चकार' इत्यत्र तदात्महोमस्याविधानान्नोपपद्यते। दर्शनशास्त्रतस्तु सर्वमुपपद्यते। सर्वभूतानि विशेषान् सामान्यात्मनि जुहाव पश्यन् सामान्यं चात्मानं विशेषे जुहाव पश्यन् सर्वकर्मसु स्वयमेव भवति। अयमात्मयाजीत्युच्यते आत्मयाजी श्रेयान् न देवयाजी' (श० ११।२।२।१३), 'य इमा विश्वा भुवनानि जुह्वदृषि-र्होता न्यसीदत् पिता नः। स आशिषा द्रविणमिच्छमानः प्रथमच्छद वराँ आविवेश॥' अत्र सर्वमेधसम्पद् दृश्यते। सर्वथा-प्याध्यात्मिकेऽपि यज्ञे प्रसिद्धवैदिकद्रव्ययज्ञानुसारेणैव दर्शनमुपासनं विहितम्। अत एव स मानसो यज्ञो भवति। तद्दुर्गा-चार्यविवृतौ स्पष्टमेव। 'हिरण्यगर्भः समवर्ततागे्र भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ (ऋ० सं० १०।१२१।१) इति मन्त्रस्यापि न त्वदुक्तोऽर्थः संगतः, 'वयम् अन्तर्वर्तमानाः प्राणरूपा भूतगणाः हविषा आत्मीयेन हव्येन अंशेन विधेम निर्माणकार्यं कुर्मः' इति भावस्य जडे प्राणरूपे भूतगणेऽसम्भवात्। न च महदण्डे लोकाः प्राणिनश्चाण्डजन्यायेन स्वयमेवान्तस्तापेन भवन्ति, तथात्वे चेतनकारणवादस्य दत्तजलाञ्जलित्वप्रसङ्गात्। अण्डजानामप्यङ्गप्रत्यङ्गनिर्माणस्य अन्तर्यामिकर्तृकत्वाभ्युपगमात्। अत एव विश्वमिदं परमेश्वरशिल्पयिष्यते। न 'अत्य-रिच्यत' इत्यनेन रिक्तः सञ्जातः, अर्थाद् ग्रहोपग्रहा वहिरागता इत्यर्थो ग्राह्यः। अण्डस्य द्यावापृथिव्यात्मकत्वेन। तद्भेदे ग्रहोपग्रहाणां तद्बहिर्गतत्वानुपपत्तेः। अति पूर्वस्य रिचेराधिक्यार्थे प्रसिद्धिः। सत्त्वान् भूमिमन्यांश्च लोकान् प्रकटितवान् इति त्वदुक्तिविरोधाच्च। वस्तुतो मन्त्रार्थस्तु—हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिः, हिरण्मयोऽण्डो गर्भवद् यस्योदरे वर्तते स सूत्रात्मा हिरण्यगर्भो वा, अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भः, तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न उच्यते। स च जातः जातमात्र एव, एकः अद्वितीयः सन्, भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वर आसीत्। न केवलं

है। यथोदित वैदिक कर्म के अनुष्ठान से विद्वान् सर्वमेध अर्थात् सम्यग् ज्ञानसम्पन्न हो जाता है। लोक प्रसिद्ध (लोकरूढ) सर्वमेध से यह सर्वमेध भिन्न है। यह सर्वमेध विद्वान् 'आत्मयाजी' कहलाता है। आध्यात्मिक यज्ञ में भी प्रसिद्ध वैदिक द्रव्ययज्ञ के अनुसार ही दर्शन (उपासना) का विधान किया गया है। अत एव उसे मानस यज्ञ कहते हैं। यह सब दुर्गाचार्य की विवृति में स्पष्ट किया गया है।

'हिरण्यगर्भः समवर्तताग्रे०' (ऋ० सं० १०।१२१।१) इस मन्त्र का अर्थ भी जो तुमने किया है, वह संगत नहीं है। क्योंकि अन्तर्वर्तमान प्राणरूप भूतगणों के द्वारा अपने हव्य अंश से निर्माण कार्य कर पाना सम्भव नहीं हो सकता, क्योंकि प्राणरूप भूत-गण तो जड़ हैं, अतः उनके लिये यह निर्माण कार्य करना सर्वथा असंभव है। उसी तरह महदण्ड में लोक और प्राणिवर्ग अण्डजन्याय से स्वयमेव अन्तस्ताप से तप्त नहीं होते हैं। अन्यथा 'चेतनकारणवाद' को जलाञ्जलि देने का ही प्रसंग प्राप्त होगा। अण्डजों में भी अंग-प्रत्यंग निर्माण, अन्तर्यामिकर्तृक ही माना गया है। अतएव इस विश्व को परमेश्वर का शिल्प माना जाता है।

'अत्यरिच्यत' का जो अर्थ तुमने किया है, वह भी ठीक नहीं है। 'अत्यरिच्यत' का 'रिक्त हुआ, अर्थात् ग्रह-उपग्रह बाहर आ गये'—यह अर्थ नहीं है। क्योंकि वह 'महदण्ड' द्यावा-पृथिवीरूप है। अतः उसके भिन्न होनेपर फूटनेपर ग्रहोपग्रहों का उसके बाहर निकल पाना संभव ही नहीं हो सकता। क्योंकि अति पूर्वक रिच धातु 'आधिक्य' अर्थ में प्रसिद्ध है और तुम्हारी 'भूमि और अन्य लोकों को प्रकट किया'—इस उक्ति से भी विरोध हो रहा है। यद्यपि परमात्मा ही हिरण्यगर्भ है, तथापि तदुपाधिभूत

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पतिरेवासीत्, किं तर्हि, स पृथिवीं विस्तीर्णां द्यां दिवम् उत अपि अस्माभिर्दृश्यमानाम् इमां पुरोवर्तिनीं भूमिं पृथिवीमन्तरिक्षं द्यां दिवं भूमिं चेति वा दाधार धारयति। सार्वकालिको लिट्। कस्मै अभिज्ञातस्वरूपाय प्रजापतये सृष्ट्यर्थं कामयते इति कः, तस्मै वा सुखरूपाय वा। यौगिकपक्षे व्यत्ययेन स्मैभावः। देवाय दानादिगुणकाय हविषा पुरोडाशेन विधेम परिचरेम। वयमृत्विज इति शेषः। विधतिः परिचरणकर्मा।

यदपि—'तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्। पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये।' (वा० सं० ३१।६) इति मन्त्रस्य व्याख्याने लिखितम्—तस्मात् यज्ञात् सङ्गतिकरणात् निर्मितात् विराट्पुरुषरूपात् यस्मिन्नन्तः वर्तमानाः सर्वे प्रकृत्यंशा हुताः कार्यरूपेण परिणताः, तस्मात् यज्ञात् पृषदाज्यं क्वचिदन्धकारः क्वचित्प्रकाशः सम्भृतः धारितः। तेनैव सर्वहुता यज्ञेन वायव्या वायुषु विचरणशीला ग्राम्या आरण्याः पशवः, अर्थात् स्वरूपेण दृश्यमानानि यानि लोकलोकान्तराणि तान्युत्पादितानि। एते वायौ विचरन्तो ग्राम्यपशुसमूहा एकस्थानस्थिते सूर्यात्मके यूपे तद्रश्मिभिराकर्षणरूपे रज्जुभिर्वा नियमिताः। कक्षासु भ्राम्यन्तो बुधशुक्रादिग्रहा आरण्याः पशवः स्वातन्त्र्येण विचरन्तो धूमकेत्वादय उच्यन्ते। नात्र भूलोकवासिनः पशुपक्ष्यादयोऽभिप्रेताः।' इति, एवमेव 'तस्मादश्वा अजायन्त' (वा० सं० ३१।८) इति मन्त्रे उभयादतः अश्वाः, एकदतः गवाजादयोऽपि न लौकिकाः पशवः' इति, तथा 'यत्पुरुषेण हविषा देवा' (वा० सं० ३१।१४) इति मन्त्रेऽपि यस्मात् सर्वहुतः पुरुषात् देवैः भौतिकशक्तिभिः यज्ञा वितताः, तेषामाज्यम् (व्यक्तेः कान्तेर्वा साधनानि) वसन्त आसीत्। इध्मः दीपकः ग्रीष्म आसीत् हविः शरद् आसीत् इति वर्णनेनायं यज्ञो न भौतिकः। अस्य पुरुषाध्यायोक्तस्य सृष्टियज्ञस्य द्रष्टा यजमानो नारायणः। नारा आपः प्रकृतिस्तत्र यस्यामतं व्याप्तिः स परमपुरुषो नारायणः' इति, तदपि सर्वं यत्किञ्चित्, धात्वर्थादिविरोधात्। यजधातोः सङ्गतिकरणार्थत्वाङ्गीकारेऽपि सङ्गतिकरणनिर्मितविराजस्तदर्थत्वानुपपत्तेः। नहि सङ्गतिकरणनिमितात् कस्माच्चित्। ऋगादिवेदानामश्वादीनाञ्चोत्पत्तिः संभवति।

उत्तरत्र तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जायन्ते। तस्माद् देवादयो ब्राह्मणादयश्चोत्पन्नाः। न तत्र प्रकृत्यंशानां होमः प्रमाणसिद्धः, विज्ञानघने परमात्मनि निरवकाशत्वेनान्यप्रवेशासम्भवात्। न च प्रकृतेः कार्यरूपेण परिणमनमेव हवनमिति साम्प्रतम्, तथात्वे पृथिव्यादिकारणानां घटपटाद्यात्मना परिणतेरपि होमपदवाच्यत्वापत्तेः। न च पृषदाज्यपदेन क्वचित् प्रकाशः क्वचिदन्धकार इत्यर्थः सम्भवति, निर्मूलत्वात्। यज्ञकर्मणि दधिसहितमाज्यं पृषदाज्यमुच्यत इति त्वदुक्तिविरोधाच्च। न च साम्यमात्रेण प्रमाणमन्तरा अन्धकारप्रकाशयोः पृषदाज्यपदप्रयोगो युक्तः, साम्येन रज्ज्वां सर्पपदप्रयोगापत्तेः। साम्यमपि न विद्यते, अन्धकारप्रकाशयोर्मिश्रणानुपपत्तेः। न वा लोकलोकान्तराणि वायव्यपशुपदेन व्यपदेष्टुं शक्यन्ते, तेषु पशुपदस्य सङ्गतिग्रहायोगात्। सन्तुष्यतु दुर्जनन्यायेन तथाभ्युपगमेऽपि ग्राम्यारण्यपदयोर्वैयर्थ्यापत्तेः। वायव्यपदेनैव तेषां ग्रहणोपपत्तेः। किञ्च, वायौ सत्त्वेन वायव्यत्वेऽपि पशुत्वं तु कुतस्त्यम्? न च ग्रामे भवानां मनुष्याणामरण्यानां वृक्षादीनां पशुत्वं सम्भवति। य एव

आकाशादिकों की ब्रह्म से उत्पत्ति होने के कारण उनसे वह उपहित हुआ भी 'उत्पन्न' हुआ कहा जाता है। उत्पन्न होते ही एकाकी अद्वितीय वह, विकारात्मक सम्पूर्ण ब्रह्माण्ड का पति अर्थात् ईश्वर हुआ। केवल पति (ईश्वर) ही नहीं हुआ, बल्कि उसने विस्तीर्ण पृथ्वी और द्यौ को भी धारण किया। यहां सार्वकालिक 'लिट्' है। ऐसे उस प्रसिद्धस्वरूप वाले प्रजापति की पुरोडाश के द्वारा हम ऋत्विग्गण परिचर्या करें। ऊपर मूलसंस्कृत में मन्त्र का सम्पूर्ण अर्थ दिया गया है।

इसी प्रकार 'तस्माद्यज्ञात्' (वा० सं० ३१।६) मन्त्र की तथा 'तस्मादश्वा०' (वा० सं० ३१।८) मन्त्र की, और 'यत्पुरुषेण हविषा देवा' (वा० सं० ३१।१४) इत्यादि मन्त्रों की ऊटपटांग व्याख्या युधिष्ठिर ने की है, व्याख्या करते समय उसे यह भी ध्यान नहीं रहा कि व्याख्या में वदतोव्याघात हो रहा है, पहले कुछ कहा अब उसके विरुद्ध ही कुछ कह रहे हैं। धात्वर्थ के साथ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लौकिकाः शब्दास्त एव वैदिकास्त एव. तेषामर्था इति मीमांसासिद्धान्तविरोधाच्च। सूर्यश्च किमर्थं यूपपदव्यपदेश्यः, यूपवत् स्थिरत्वादिति चेन्न, 'सविता रथेना देवो याति भुवनानि पश्यन्' (वा० सं० ३३।४३) इति विरोधात्। न च स्थिरत्वमात्रेण यूपत्वं सम्भवति, पर्वतादीनामपि तत्त्वापत्तेः। किमर्थं कथं सूर्यो यूपः किमर्थं च ग्रहोपग्रहादयः, पशवो यज्ञत्वनिर्वाहमिति चेन्न, अव्यापारेषु व्यापारयितत्वेन नैरर्थक्यात्।

वस्तुतस्तु कल्पनापि विहितैव फलवती भवति। न च क्वचिद्विधानं दृश्यते, यत् सूर्ये यूपदृष्टिः कर्तव्या, ग्रहोपग्रहेषु पशुदृष्टिः कर्तव्येति। यथा सिंहभिन्ने सिंहगतशौर्यक्रौर्यादिगुणयोगात् सिंहत्वकल्पना भवति, तथैव यज्ञभिन्ने यज्ञत्वकल्पनायै यज्ञगतयूपपश्वादिकल्पना अन्यत्र कर्त्तव्या भवति। तथात्वे च सिंहभिन्नो देवदत्तादिर्न मुख्यो सिंहः, किन्तु गौणसिंहो भवति, तथैव प्रसिद्धयूपपश्वादिविशिष्टो यज्ञ एव मुख्यो यज्ञः, सृष्ट्यादियज्ञस्तु कल्पितो गौण एव। तत्र मुख्ययज्ञगुणानां कल्पनात् सूर्ये यूपत्वकल्पनया ग्रहोपग्रहेषु पशुत्वकल्पनया सृष्टौ यज्ञत्वकल्पना, अहोमे होमकल्पनेति गौण एव यज्ञो भवति। ज्ञानेऽपि तथैव अर्पणहविरग्न्यादिकल्पनया यज्ञत्वकल्पनैव भवति। तथात्वे रामायणभारतकल्पनायां यथा ऐतिहासिकाः सीतारामादय एव मुख्यनायकाः। नाट्ये प्रकृतानि पात्राणि तु मुख्यार्थबोधनाय प्रयुज्यन्ते, तथैव मुख्या यज्ञा मन्त्रब्राह्मणसूत्रसम्मता एव। सृष्टौ तेषु तेष्वाधिदैविकेष्वाधिभौतिकेषु क्रियाकलापेषु यज्ञभावना विहिता चेदवश्यं महाफलदायिनी भवेत्। स्वेच्छाकल्पना तु निरर्थकैव। तस्माद् द्रव्ययज्ञा नाटकरूपा मुख्ययज्ञास्तु सृष्टियज्ञादय इति यत्पूर्वमुक्तं युधिष्ठिरेण तत्सर्वं निर्मूलं मोहमूलकं प्रसिद्धयज्ञद्वेषमूलकं वा। मिथ्यावादस्य पदाभावादेव नावस्थानमित्याभाणकं सत्यमेव। लोकेषु वायव्याः पक्ष्यादयो ग्राम्या अजाव्यादयः, आरण्या हरिणादयः प्रसिद्धभेदभिन्नाः। उभयादतोऽश्वादयः, एकदतो गवादयः प्रसिद्धाः। ग्रहोपग्रहेषु समानेष्वपि कथं केषाञ्चिद् वायव्यत्वं केषाञ्चिद् ग्राम्यत्वम् अन्येषामारण्यत्वम्? केषामुभयादत्त्वम्? केषाञ्चैकदत्त्वम् इति। भौतिकशक्तिषु देवत्वमपि काल्पनिकमेव। न च जडासु भौतिकशक्तिषु यज्ञविस्तारकत्वमपि सम्भवति। आज्यम् इध्मं हविश्च यज्ञे प्रसिद्धम्। प्रकृते वसन्तस्य तु न मुख्यमाज्यत्वम्। न वा ग्रीष्मस्येध्यत्वं न वा शरदो हविष्ट्वम्। केनचिद्गुणेन असिंहंसिंहमिव अनाज्ये वसन्ते आज्यत्वमनिध्मे ग्रीष्मे इध्मत्वमहव्ये शरदि हव्यत्वं च कल्पितमेव। 'असौ वा आदित्यो यूपः' इत्यादित्यस्य यूपत्वमिव क्वचित्कस्यचिद् ग्रहस्य पशुत्वयजत्वमुक्तमपि स्यात्तदापि तस्य गौणत्वमेव, नहि वाच ऋक्त्वे मनसो मनुष्ये यजुष्ट्वे प्राणस्य सामत्व उक्तेऽपि मुख्यमेव ऋक्त्वादिकं तत्र भवति।

विरोध होने का भी ध्यान नहीं रक्खा। अतिप्रसंगादिदोषों का भी ध्यान नहीं रक्खा, पदप्रयोग के औचित्य को भी नहीं देखा। साम्य कैसे बताया जाता है, उसे भी नहीं समझ पाये। अपने को मीमांसक कहलाने वाले स्वयं ही मीमांसा के सिद्धान्तों को भूल गये। तात्पर्य यह है कि युधिष्ठिरजी 'अव्यापारेषु व्यापारः' कर बैठे।

वस्तुतः स्वैरकल्पना (स्वेच्छानुसार कल्पना) नहीं की जाती, किन्तु विहित कल्पना ही फलवती होती है। कल्पना भी किसी आधार पर ही की जाती है, निराधार कल्पना नहीं हुआ करती। रामायण—भारत की कल्पना में ऐतिहासिक सीता-राम आदि ही मुख्य नायक हैं। नाट्य में प्रकृतपात्रों का प्रयोग, मुख्यार्थबोधन के लिये किया जाता है, उसी तरह मुख्य यज्ञ वे ही कहलाते हैं, जो मन्त्र, ब्राह्मण और सूत्र से सम्मत हों। तत्तद् आधिदैविक—आधिभौतिक क्रियाकलापों में यज्ञ भावना यदि की जाती है, तो वह अवश्य महाफलदायिनी होती है। किन्तु स्वेच्छा से की हुई कल्पना तो निरर्थक ही होती है। अतः द्रव्ययज्ञों में नाटक की कपोल-कल्पना करना और सृष्टियज्ञादिकों में मुख्य यज्ञ की स्वैर कल्पना करना यह सब निरर्थक प्रयास युधिष्ठिर ने किया है, क्योंकि वह निर्मूल है, केवल मोहमूलक अथवा प्रसिद्ध यज्ञद्वेषमूलक भी हो सकती है। उसी तरह भौतिक शक्तियों में देवत्व भी काल्पनिक है। जड़ भौतिक शक्तियों में यज्ञविस्तारकत्व भी संभव नहीं है। आज्य, इध्म, और हवि तो यज्ञ में प्रसिद्ध हैं। प्रकृत में 'वसन्त' में मुख्य-आज्यत्व, तथा 'ग्रीष्म' में मुख्य इध्मत्व, और 'शरद्' में मुख्य हविष्ट्व तो संभव हो नहीं सकता। किसी गुण को लेकर असिंह में सिंह की

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परमपुरुषे नारायणे यजमानत्वमारोपितमेव, तस्य नित्यशुद्धबुद्धमुक्तपूर्णत्वेन सर्वनिरपेक्षत्वात्।

सायणरीत्या त्वयं मन्त्रार्थः—सर्वहुतः सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुतः, वसन्ताज्यादि-रूपस्य बाह्यद्रव्यस्याद्याप्यनुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषरूपमेव मनसा हविषा इव सङ्कल्प्य तेन पुरुषाख्ये हविषा देवा मानसं यज्ञमकार्षुरित्युत्तरत्र लक्ष्यमानत्वात्। तस्मान्मानसाद् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दधि च आज्यं चेत्येवमादि सर्वं सम्पादितम्। तथा वायव्यान् वायुदेवताकान् तान् लोकसिद्धान् पशून् चक्रे उत्पादितवान्। ये आरण्या द्विखुरादयः, ये च ग्राम्या ग्रामे भवा गवाश्वादयः तानुत्पादितवान्। पशूनामन्त-रिक्षद्वारा वायुदेवताकत्वं मन्त्रान्तरव्याख्याने समाम्नातम्। तथाहि—'वायवः स्थेत्याह वायुर्वान्तरिक्षस्याध्यक्षः, अन्तरिक्षदेवत्याः खलु वै पशवः, वायव एवैतान् परिददाति।' (तै० ब्रा० ३।२।१।३)।

यद्यपि—'अग्निः पशुरासीत्। तेनायजन्त। वायुः पशुरासीत्। तेनायजन्त।' (वा० सं० २३।१७ (तै० सं० ५।७।२६) नह्यग्निवायुसूर्यरूपैः पशुभिर्लौकिकद्रव्यमयेषु यज्ञेषु यजनं सम्भवति। अत एव निरुक्तकारोऽपीदमेव तत्त्वं मन्यते। तथाहि—'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥' (वा० सं० ३१।१६), 'यज्ञेन यज्ञमयजन्त देवाः, अग्निनाग्निमयजन्त देवाः, अग्निः पशुरासीत्। तमालभन्त तेनायजन्त' इति ब्राह्मणम्, तानि धर्माणि प्रथमान्यासन् तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः। द्युस्थानो देवगण इति नैरुक्ताः। पूर्वं पूर्वयुगमित्याख्यानम्' (नि० १२।४१) (ऐतरेयब्राह्मणे १।१६) तथैव व्याख्यातोऽयं मन्त्रः। 'द्युस्थानो देवगणः' इत्युक्त्वा आदित्यरश्मयः साध्या देवा इति यास्केनोक्तम्। छन्दांसि वै साध्या देवा इति ऐतरेयेऽपि तदेव सङ्केतितम्। पुराणेषु छन्दसामादित्यस्थरूपेण वर्णनं दृश्यते। 'प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांसि' (ऐ० ब्रा० १।१८), 'छन्दोभिरश्वरूपैः' (वायुपुराण ५२।४५), 'हयाश्च सप्त छन्दांसि' (विष्णुपुराण २।८।७)। आधि-दैविकानि तत्त्वान्यत्र पशव उच्यते। अत एव शाखासु ब्राह्मणग्रन्थेषु यत्र क्वापि पशुयागवर्णनं दृश्यते, तत्र सर्वत्र ततः पूर्वं पश्चाद्वा पुराकल्पार्थवादरूपेण सर्गकालिकघटनावर्णनं दृश्यते। यथा—'प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून् सृजेयेति। स आत्मनो वपामुदखिदत्। तामग्नौ प्रागृह्णात्। ततोऽजस्तूपरः समभवत्। तं स्वायै देवताया आलभत। ततो वै स प्रजाः पशूनसृजत।' (तै० सं० २।१।१)। सर्वोऽयं कथानकः सर्गकालिकः। आचार्यशबरस्वामिनापि सृष्टिपरमेव तद् व्याख्यातम्। (मी० १।२।१०) भाष्ये। तथैव तैत्तिरीयसंहितायाम्—'यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेक-शितिपादमालभेत' (तै० सं० २।१।२) इति विधेः पूर्वं विस्तृतः पुराकल्पार्थवादो वर्णितः। उक्तदृष्ट्या पुरुषमेधाश्वमेध-गोमेधादिषु लौकिकाः पशवः सृष्टियज्ञस्य सर्गकालीना अथवा आधिदैविकपदार्थस्य वर्तमानकालीनाः प्रतिनिधिस्वरूपा एव'

तरह अनाज्य बसन्त में आजत्व, अनिध्म ग्रीष्म में इध्मत्व, अहव्य शरद् में हव्यत्व को कल्पित ही कहना होगा। 'असौ वा आदित्यो यूपः' इस वचन से आदित्य में यूपत्व की तरह कहीं किसी ग्रह में पशुत्व, अजत्व कहा भी हो तो वह गौण ही होगा। वाणी ऋक्त्व, मनमें यजुष्ट्व, प्राण में सामत्व यद्यपि बताया गया है, तथापि वहां ऋक्त्व आदि को मुख्य रूप में नहीं समझना चाहिये। परम पुरुष नारायण तो नित्य, शुद्ध, बुद्ध, मुक्त, पूर्ण हैं, अतः सर्वनिरपेक्ष हैं, इस कारण उनमें यजमानत्व का केवल आरोपमात्र ही किया गया है। मन्त्र का वास्तविक अर्थ सायण के अनुसार ऊपर मूल संस्कृत में दिया गया है।

उसी प्रकार 'अग्निः पशुरासीत्०' (वा० सं० २३।१७,–तै० सं० ५।७।२६) मन्त्र की व्याख्या करते हुए पृ० १२४ से पृ० १२६ तक युधिष्ठिर ने जो लिखा है, उसके पढ़ने से बिलकुल स्पष्ट हो जाता है कि युधिष्ठिर को शास्त्रतात्पर्य का ज्ञान नहीं है। शास्त्रतात्पर्य (रहस्य) का ज्ञान न होने से यह सब उटपटांग लिख दिया है। तथापि वास्तविक शास्त्रतात्पर्य बताते हुए सबका उत्तर हम पहले ही दे चुके हैं। यह पहले ही बता चुके हैं कि अग्नि आदि में पशुत्व का आरोप, मानस ही है, क्योंकि सर्गकाल में

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति, तदेतत्सर्वं शास्त्रतात्पर्यज्ञानविजृम्भितम्, दत्तोत्तरत्वात्। उक्तमेतद् यद् अग्न्यादिषु पशुत्वारोप एव मानसः, सर्गकाले प्रत्यक्षपश्वादीनामभावात्। अग्न्यादिषु पशुबुद्धिं कृत्वा मानसयज्ञनिर्वाहः क्रियते स्म। 'उषा वा अश्वस्य मेध्यस्य शिरः' (बृ० उ० १।१।१) इति बृहदारण्यकेऽश्वमेधोपासने प्रत्यक्षस्याश्वस्याभावे भावमयेनैवाश्वमेधेन यजनं भवति। यत्र विधिर्भवति तत्र तु यूपेष्वादित्यबुद्धिरिव प्रस्तरेषु यजमानबुद्धिरिवाग्न्यादिषु पशुबुद्धिरुपासनार्थैव 'सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते। परार्थं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्।' (श्लो० वा०) इति भट्टपादोक्तेः। यत्र विधिस्तत्र तु मानसीभावनैव क्रियते। पुराकल्पार्थवादस्य तु वाच्येऽर्थे तात्पर्याभावेन विधिप्राशस्त्यबोधन एव तात्पर्यात्।

निरुक्तव्याख्यानस्य त्विदं तात्पर्यं यत्—स्थावरजङ्गमभावमापन्नेन हविर्भूतेन अग्निं सर्वदेवतात्मभूतमादित्यं प्रनाडिकया महान्तमात्मानमयजन्त। देवा देवभाविनः पूर्वे ज्ञानकर्मसमुच्चयानुष्ठायिनो यजमानभावमापन्नाः साध्या विश्वसृजः ऋषयः प्राणाः, तानि धर्माणि कर्माणि तथाविधज्ञानयुक्तानि प्रथमानि मुख्यानि महदात्मप्राप्तये पूर्वमासन्। ते च तानि कृत्वा नियमेनानन्यभावित्वात् फलस्य महिमानस्तदानुपूर्व्येण जातमहदात्मभावाः सन्तस्तमेव नाकं महान्तमात्मानमेकान्तसुखमसचन्त। तद्भावमेव ते आपेदिरे। न केवलं त एव, किन्तु पूर्वे साध्याः शब्दार्थोपदेशनित्यत्वाद् यत्र पूर्वे पूर्वतरे च ज्ञानकर्मसमुच्चयानुष्ठायिन आसते, 'विश्वसृजः प्रथमे सत्रमासत' (तै० ब्रा० ३।१२।९) इति श्रुतेः। 'तमुन्निन्यथुः सर्वगणं सर्वनामानम्' (नि० ६।३६) इत्यत्र स्पष्टमेवाग्नेः स्थावरजङ्गमभावापत्तिर्विज्ञायते।

'हिमेनाग्निं घ्रंसमवारयेथा पितुमतीमूर्जमस्मा अधत्तम्। ऋबीसे अत्रिमश्विनावनीत मुन्निन्यथुः सर्वगणं स्वस्ति॥' (ऋ० सं० १।११६।८)। कक्षीवत आर्षम्। प्रातरनुवाकाश्विनयोः शस्यते। तदर्थस्तु दुर्गाचार्येण एवमुच्यते—हे अश्विनौ, हिमेन उदकेन अभिवृद्धं ग्रीष्मान्ते अग्निं घ्रंसम् अहर्लक्षणम् इमांल्लोकान् दिधक्षन्तमिव युवाम् अवारयथाम्। वारयित्वा च पितुमतीम् अन्नवतीम् पुरोडाशाद्यन्नसहिताम् ऊर्जमाज्यलक्षणां युवामधत्तम्। अस्मै अग्नये हविर्भाजे वर्षानुग्रहपूर्विकयौषधिनिष्पत्त्या युवामेव हे अश्विनौ, योऽयं ऋषीसे पृथिव्यामग्निरनुप्रविष्टोऽन्तर्येनेमानि पृथिवीगर्भेषूपनिहितानि तिन्दुकादीनि पच्यन्ते। यमवेक्ष्योक्तम्—'ऋबीसपक्वं नाश्नीयात्' (मानवधर्मसूत्र १।५।६।१४) युवां तमुन्निन्यथुः। ओषध्याद्यन्तर्वर्तिनमोषध्यादिरूपेणैव सर्वगणं सर्वनामानम्। अग्निरेव ह्ययमनेनोषध्यादिरूपेणावस्थितिः सर्वैर्नामभिरभिधीयते, अग्नेः सर्वत्रोत्पत्तिदर्शनात्। किमर्थं स्वस्ति, अस्य जगतः स्वस्त्ययनाय, ओषध्याद्यभावे सर्वस्य विनाशसम्भवात्। तस्मान्न निरुक्तव्याख्यानेन 'अग्निः पशुरासीत् तमालभन्ते, इति ब्राह्मणमपि तमेवार्थमाह। अग्नेः पशुत्वस्य प्रत्यक्षविरोधात्। पशुरत्र साधनमुच्यते। तच्च पूर्वोक्तरीत्याग्निरेवौषध्यादिस्थावरजङ्गमरूपेण परिणतः। तमग्निमालभन्त अजादिरूपेण व्रीहियवादिरूपेण च परिणतम् अलभन्त तेनायजन्त इत्येवार्थः। दुर्गाचार्येण तथैव व्याख्यातत्वात्। यथा नहि कोऽपि घटं पटयितुमीष्टे, तथा नहि कश्चिद् वाक्यशतैरप्यग्निं पशयितु(पशुं कर्तुं)मीष्टे। त्वयापि ७० तमेपृष्ठे 'यत्परः शब्दः स शब्दार्थः' इति न्यायं व्याकुर्वता लिखितं यत् शब्दस्य अपरिभाषितः (विशेषवचनद्वाराऽप्रकाशितः) अर्थः स्वाभाविकत्वान्मुख्यः। यश्च वचनविशेषद्वारा परिभाषितोऽर्थः, स कृत्रिमः, अत एव गौणः। छन्दःसु च गौण एव देवपदप्रयोगः, यष्टृत्वासंभवात्। दुर्गाचार्यरीत्या कर्मोपासनसमुच्चयानुष्ठायिनो देवभावमापन्ना द्युस्थानादेवा एव वैदिका अर्था अधिकारिणां हृदयेषु छन्दोभिः प्राप्यन्त इति छन्दःस्वश्वादिव्यवहारोऽपि गौण एव। नहि छन्दोऽश्वयोरैक्यं पर्यायवाचकत्वं वा। विष्णोर्भगवतो वाहनस्य गरुडस्यापि तत्र तत्र

प्रत्यक्ष पशु आदि का अभाव था। अग्नि आदि में पशुबुद्धि करके मानस यज्ञ का निर्वाह किया जाता था। 'उषा वा०' (बृ० उ० १।१।१) इस बृहदारण्यकवचन से स्पष्ट ज्ञात होता है कि अश्वमेधोपासन में प्रत्यक्ष अश्व के अभाव में भावनामय अश्वमेध से ही यजन किया गया। जहाँ विधि होती है, वहाँ तो यूप में आदित्यबुद्धि की तरह, प्रस्तर में यजमान बुद्धि की तरह, अग्नि आदि में पशु बुद्धि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

छन्दोभयत्वमुक्तम्। तत्राप्ययमेवाभिप्रायः। भक्तिसिद्धान्ते तु छन्दसां लीलाविग्रहोऽपि गरुडो भवतीत्यन्यदेतत्। पुराकल्पार्थवादानां सुखावबोधार्थख्यायिकारूपत्वाद् विध्यर्थस्तुतावेव तात्पर्यम्। तदर्थेषु क्वचिद् यज्ञहोमादिशब्दसत्त्वेऽपि विधिमन्तरा न तच्चिन्तनमुपासनम्। तादृशचिन्तनविधाने छान्दोग्योपनिषदुक्तोद्गीथाद्युपासनवत्तत्र तत्र केनचिद्गुणयोगेन यूपपश्वादिबुद्धयः कर्त्तव्या भवन्ति। न सृष्टेर्न वा आधिदैविकपदार्थानां मुख्यं यज्ञत्वं सम्भवति, पशुयूपादिशब्दानां वैदिकेषु तेषु तेष्वर्थेष्वेव प्रसिद्धत्वात्। वचनबलात्तु त्वद्रीत्यापि गौणमेव तेषु पशुयूपत्वादिकमिति। जैमिनिनापि 'गुणवादस्तु' (जै० सू० १।२।१०) इति सूत्रेण तदेवोक्तम्। शबरस्वामिनापि गुणवादत्वेनैवार्थवादानां सङ्गतिरुक्ता। 'प्रजापतिर्वा इदमेवमासीत्' इति पुराकल्पसम्बन्धेऽपि स आह—'यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत' इत्याकाङ्क्षितत्वादस्य विधेः शेषोऽयम्।

'स आत्मनो वपामुदखिद दिति' कथं गुणवादः? इत्थं नाम, नासन् पशवो यदात्मनो वपामुदखिददिति। एतच्च कर्मणः सामर्थ्यं यदग्नौ प्रहुतमात्रायां वपायां तूपर उदगात्। इत्थं बहवः पशवो भवन्तीति। कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदखिददित्याह—उच्यते, असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्तमाने द्वयं निष्पद्यते। यच्च वृत्तान्तज्ञानं यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तज्ञानं न प्रवर्तकं न निवर्तकं चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्। प्ररोचनया तु प्रवर्तते द्वेषान्निवर्तत इति तयोर्विवक्षा। नात्रत्येन शाबरभाष्येण त्वदीयः पक्षः सिद्ध्यति, प्रत्युत खण्ड्यत एव, वाच्यार्थस्याविवक्षितत्वोक्तेः। तत एव न सृष्टियज्ञादिकमाधिदैविकं यज्ञादिकं वात्र विवक्षितम्, इति सन्तुष्यतुदुर्जनन्यायेन वृत्तान्तान्वाख्यानसमाधानमुक्तम्। वृत्तान्तान्वाख्याने विधीयमाने वेदस्यादिमत्ता प्रसज्येत। तथापि निरालम्बनं कथमाख्यानमित्याग्रहिणं प्रत्युच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्याद्वायुराकाश आदित्यो वा। स आत्मनो वपामुदखिददिति। वृष्टिं वायुं रश्मिं वा। तामग्नौ प्रागृह्णात्। वैद्युत आलौकिके वा। ततोऽज उत्पन्नं बीजं वीरुद्वा। तमालभ्य उपयुज्य प्रजाः पशून् प्राप्नोति। इत्थं सृष्टेराधिदैविकानां पदार्थानां प्रतिपादनेऽपि यदि कश्चित्तत्र सृष्टियज्ञमाधिदैविकं वा यज्ञं विवक्षित्वाऽकाण्डताण्डवं कुर्यात्तं प्रत्याह—गौणाः शब्दाः, गौण्यावृत्त्यैव तादृशोऽर्थः, तात्पर्यानुरोधेन स्तुत्यर्थतैव। तत्रैव भट्टपादः—'एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता, किन्तु स्तुतित्वं हीयते, अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः। मन्त्रार्थवादप्रामाण्यात् सृष्टिप्रलयाविष्येते। तत्र सृष्ट्यादौ प्रजापतिरेव योगी। तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमे पशूनामभावात् स्वमाहात्म्येन आत्मन एव पशुरूपमिति मयि वपोत्खननादिकृतवांस्ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थितः। इतीदृशमिदं कर्म प्रत्यासन्नफलम्। एवं च महता प्रजापतिना चरितमिति सर्वं सत्यमेव। ननु चैवं वेदानामादिमत्ता दोष इति चेत्, तत्राह भट्टपादः—'प्रतिसृष्टि चतुर्लिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नातिव्याप्तिप्रसङ्गः' इति। अयमेव सिद्धान्त उत्तरमीमांसायां बादरायणेन समाननामरूपेतिसूत्रेण दर्शितः। तद्व्याख्यातृभिः श्रीशङ्कराचार्यादिभिस्तथैव विवृतः। यत्त्वत्रापि युधिष्ठिरेण कुचोद्यं कृतम्—'न्यायसुधायां व्याजेन श्लोकवार्तिके ईश्वरस्य सृष्टिप्रलययोश्च निषेधादत्र स्वीकाराच्च स्ववचनविरोधः' इति, तदपि तुच्छम्, पूर्वोत्तरवचनयोस्तात्पर्यभेदस्योक्तत्वात्।

उपासनार्थ ही की गई है। भट्टपाद ने भी इसका समर्थन किया है। जहां विधि होती है वहां तो मानसीभावना ही की जाती है। पुराकल्परूप अर्थवाद का वाच्यार्थ में तात्पर्य न रहने से विधिप्राशस्त्य के बोधन करने में ही [illegible] रहता है। निरुक्तकार के व्याख्यान का तात्पर्य ऊपर मूल संस्कृत में दिया गया है।

प्रथमाध्याय के द्वितीयपादीय दशमसूत्र के व्याख्यान में पृ० १५२ पर तैत्तिरीय संहिता के वचन का अर्थ करते हुए युधिष्ठिर कहते हैं—'महदण्ड ही प्रजापति है, उसने प्रजा की इच्छा से अपने शरीर की वपा को स्वान्तर्विद्यमान अग्नि से सम्बद्ध किया, उससे अवयवविभागरहित तूपर अज गतिशील घन अंश उत्पन्न हुआ। उसको उसकी देवता के लिये प्राप्त कराया (अण्डस्य वायुतत्त्व



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रीरामानुजाचार्यादिभिः 'शास्त्रयोनित्वात्' ( ब्र० सू० १।१।३ ) इति सूत्रे कृतस्येश्वरखण्डनस्यानुमानिकेश्वरखण्डन एव तात्पर्यं न वैदिकेश्वरखण्डन इति स्वीकारात्। तथैव प्रकृतेऽपि समाधानात्।

यत्तु प्रथमाध्याये द्वितीयपादे दशमस्य सूत्रस्य व्याख्याने १५२ पृष्ठे तैत्तिरीयसंहितावचनं व्याकुर्वतोक्तम्— 'महद्दण्ड एव प्रजापतिः प्रजाकामनया स्वशरीरस्य वपां सारभूतांशं स्वान्तर्विद्यमानेनाग्निना संबद्धं चकार। ततस्तूपरः अवयवविभागरहितः अजः गतिशीलः घनोंऽशो जातः। तं तद्देवतायै प्रापितवान् ( अण्डस्थवायुतत्त्वेन संयुक्तः ) स प्रजाः पशूनुत्पादितवान्। वायुसंयोगेन स घनांशो विभक्तः। तेन ग्रहोपग्रहसहितस्य सौरमण्डलस्य निर्माणं जातम्। तस्माद् भूतिकामो वायुदेवत्यं तूपरमजं स्पृशेत्। स वायुस्तथा सत्येनं भूतिं गमयति' इति, तत्सर्वं मीमांसादिप्रमाणविरुद्धमेव। जडे महद्दण्डे चेतनधर्मस्य कामस्यासम्भवात्। तूपराजशब्दयोः शृङ्गरहिते छागे च प्रसिद्धिः, नावयवविभागे गतिशीले घनांशे तत्प्रवृत्तिः सम्भवति, न च मुख्येऽर्थे सम्भवति गौणार्थतायुक्ता। न वा वपाशब्दस्य सारभूतोऽर्थो मुख्यः। लक्षणायां बीजाभावाच्च। न च त्वया वायुश्चेतनोऽभ्युपेयते, यत्प्रसादाय तूपरोऽजः स्प्रष्टव्यः। स्पर्शनेन को लाभो वायोः? अन्यच्च 'न विधौ परः शब्दार्थः' इति मीमांसासिद्धान्ताच्च न विधौ लाक्षणिकोऽर्थो ग्राह्यः। अतः 'तूपरमालभेत' इति विधौ कथं तूपरशब्दस्य गौणोऽर्थः स्यात्।

सृष्टिप्रतिपादनमुपनिषत्सु प्राधान्येन दृश्यते, ब्रह्मसूत्रेषु च तद्विचारः। तत्र विगानदर्शनेन ब्रह्मणो जगज्जन्मादिकारणत्वं वेदान्तवाक्यानां ब्रह्मणिसमन्वयश्च सन्दिह्यते—प्रतिवेदान्तमन्या सृष्टिरुपलभ्यते।' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' ( तै० उ० २।१ ) इत्याकाशादिका सृष्टिराम्नायते। क्वचिच्च 'तत्तेजोऽसृजत' ( छा० उ० ६।२।३ ) इति तेजआदिका, क्वचिच्च स प्राणमसृजत्, प्राणाच्छ्रद्धाम्' (प्र० उ० ६।४)। इति प्राणादिका, क्वचिच्च 'स इमाँल्लोकानसृजत अम्भो मरीचीर्मरमापः' ( ऐ० उ० ४।१।२ ) इत्यत्राक्रमेणैव लोकानामुत्पत्तिः समाम्नायते। क्वचिच्च 'असद्वा इदमग्र आसीत्ततो वै सदजायत' ( तै० उ० २।३ ) इत्यसत्पूर्विका सृष्टिराम्नायते। क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया आम्नाता 'तद्धैकमाहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्य एवं स्यात्····कथमसतः सज्जायेत, सत्त्वेव सोम्येदमासीत्' ( ६।६।२।१-२ ) क्वचिच्च स्वयंकर्तृका व्याक्रिया 'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियते' एवं

से संयुक्त हुआ ), उसने प्रजा और पशुओं को उत्पन्न किया। वायु के संयोग से वह घनांश विभक्त हुआ। उससे ग्रहोपग्रहसहित सौरमण्डल का निर्माण हुआ। इसलिये भूतिकामनावाला वायुदेवतावाले तूपर अज का स्पर्श करे। वैसा करने पर वह वायु उसे भूति प्रदान करता है।' किन्तु यह सब, मीमांसादि प्रमाण के विरुद्ध ही है। जड़भूत महद्दण्ड में चेतनधर्म काम ( इच्छा ) का होना संभव ही नहीं। 'तूपर' और 'अज' दोनों शब्द शृङ्गरहित और छाग के अर्थ में प्रसिद्ध हैं, अवयवविभागरहित, गतिशील, घनांश आदि अर्थों में उस ( तूपर, अज ) शब्द की प्रवृत्ति नहीं है। मुख्यार्थ के संभव रहते शब्द को गौणार्थक मानना उचित नहीं है। उसी तरह 'वपा' शब्द का सारभूत अंश अर्थ करना भी ठीक नहीं है, क्योंकि वह मुख्यार्थ नहीं है। और लक्षणा करने में कोई बीज ( कारण ) नहीं है। और तुम, वायु को चेतन भी नहीं मानते हो, जिसकी प्रसन्नता के लिये तूपर अज का स्पर्श करना होगा। उसके स्पर्श कर देने मात्र से वायु को कौन-सा लाभ होगा? और 'न विधौ परः शब्दार्थः' इस मीमांसा सिद्धान्त के अनुसार विधि में लाक्षणिक अर्थ का ग्रहण नहीं किया जाता। अतः 'तूपरमालभेत' इस विधि में 'तूपर' शब्द का गौण अर्थ कैसे किया जा सकेगा।

उपनिषदों में प्रधानतया सृष्टि का प्रतिपादन किया हुआ दिखाई देता है और ब्रह्मसूत्रों में उसका विचार किया गया है। किन्तु इस विषय में विगान ( विरोध ) दिखाई देता है। ब्रह्म की जगज्जन्मादिकारणता और वेदान्तवाक्यों का ब्रह्म में समन्वय जो बताया गया है, उसमें सन्देह होता है। प्रत्येक वेदान्त में अन्य सृष्टि उपलब्ध होती है। कहीं तो आकाशादिका सृष्टि, तो कहीं तेज आदिका सृष्टि, कहीं प्राणादिका सृष्टि, कहीं अक्रम से ही लोकोत्पत्ति बताई गई है, कहीं असत्पूर्विका सृष्टि, तो कहीं सत्पूर्विका सृष्टि बताई

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विप्रतिपत्तौ वस्तुनि विकल्पानुपपत्तेर्न वेदान्तवाक्यानां ब्रह्मकारणावधारणपरता इत्याशङ्क्य समाधानमुक्तम्, प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमद्वारके विगाने सत्यपि न स्रष्टरि किञ्चिद्विगानमस्ति, यथाव्यपदिष्टोक्तेः। यथाभूतो हि एकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मा एकोऽद्वितीयः कारणत्वेनाभिप्रेतः। तथैव वेदान्तान्तरेष्वपि व्यपदेशः—'नवियदश्रुतेः' ( ब्र० सू० २।३।१ ) इत्यत्र कार्यविषयमपि विगानमुक्तम्। भवेदपि कार्यस्य विगीतत्वम्, अप्रतिपाद्यत्वात्। नह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः। नहि तत्प्रतिबद्धः कश्चित् पुरुषार्थो दृश्यते श्रूयते वा। न वा कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र ब्राह्मणवाक्यैः साकमेकवाक्यताया गम्यमानत्वात्। 'अन्नेन सोम्यशुङ्गेनापोमूलमन्विच्छद्भिः सौम्यशुङ्गेन तेजामूलमन्विच्छ तेजसा सोम्यशुङ्गेन सन्मूलमन्विच्छ' ( छा० उ० ६।८।४ )। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चवर्णनम्, फलवत्सन्निधावफलं तदङ्गमिति न्यायात्। 'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा। उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥' ( मा० का० ३।१५ ) इति श्रुतेः। ब्रह्मप्रतिपत्तिसंबद्धं च फलं श्रूयते, तरति शोकमात्मवित्' ( छा० उ० ७।१।३ ), 'तमेव विदित्वातिमृत्युमेति' (श्वे० उ० ३।८) इति श्रुतिभ्यः। कर्मप्रकरणेऽप्युक्तायाः सृष्टेर्विधिस्तुत्यर्थता जैमिनिना शबरस्वामिना च स्वीकृता। तदपि दर्शितमेव। तस्मान्मुधैव सृष्टियज्ञादिकल्पनया मुख्ययज्ञस्य तदनुकरणत्वकल्पना। प्रत्युत प्रसिद्धयज्ञातिरिक्तेषु सर्वेष्वपि यज्ञेषु गौणी एव यज्ञकल्पना द्रष्टव्या।

यदपि—'अस्य सौरमण्डलस्य स्थितिप्रलयकालौ चतुःषष्टिकोट्युतअर्बुदवर्षपरिमितौ' इति, तदपि न समीचीनम्, अस्य दैनन्दिनकालत्वात्। ब्रह्मणो मासवर्षायुरुख्यकालपर्यालोचनया तु निम्नोक्ताः काला भवन्ति। तथा च मनुः—'निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः॥ ६४॥, 'पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।' 'दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्॥ ६७॥, 'चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः॥ ६९॥ इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्तन्ते सहस्राणि शतानि च॥ ७०॥ यदेतत् परिसंख्यातमादावेव चतुर्युगम्। एतद् द्वादससाहस्रं देवानां युगमुच्यते॥ ७१॥ दैविकानां युगानां तु सहस्रं परिसंख्यया। ब्राह्ममेकमहर्ज्ञेयं तावतीरात्रिरेव च॥ ७२॥' ( म० १ अध्याय ) अर्थात् 'उत्तरायणदक्षिणायनात्मकं मानववर्षं देवानामहोरात्रम्। त्रिंशताहोरात्रेण देवानां मासः। तादृशैर्द्वादशमासैर्देवानां वर्षः। देवमानेन चतुःसहस्रवर्षाणि कृतयुगम् तद्दशमांशः सन्ध्याकालः, तावानेव सन्ध्यांशकालः। अर्थात् कृतयुगकालात् पूर्वं देवमानेन चतुःशतवर्षाणि सन्ध्याकालः, युगकालानन्तरं च तावानेव कालः सन्ध्यांशकालः। सन्ध्यासन्ध्यांशसहितस्य कृतयुगस्य कालो देवमानेन ४८०० वर्षाणि, मानवमानेन च ४८००×३६०=१७२८००० अष्टाविंशतिसहस्रोत्तरसप्तदशलक्षवर्षाणि। त्रेतायुगकालो देवमानेन सहस्रत्रयवर्षाणि। सन्ध्यासन्ध्यांशसहितस्य त्रेतायुगस्य कालो देवमानेन ३६०० वर्षाणि, मानवमानेन १२९६०००

गई है। इन विप्रतिपत्तियों के सामने रहने पर तथा वस्तु में विकल्प न बन सकने के कारण वेदान्त वाक्यों से ब्रह्म में सृष्टिकारणता का कैसे निश्चय किया जा सकता है। ऐसी आशंका करके समाधान यह किया गया है कि सृज्यमान आकाशादिकों के क्रम में विरोध रहने पर भी उनके स्रष्टा के विषय में कोई विरोध नहीं है। मृदादि के दृष्टान्तों से यह बताया गया है कि कार्य का कारण से अभेद है, इस अभेद को बताने के लिये ही सृष्ट्यादि प्रपञ्च का वर्णन किया गया है, 'फलवत्सन्निधौ अफलं तदङ्गम्' यह नियम है, इसी का समर्थन माण्डूक्यकारिका से भी किया गया है। ब्रह्म-प्रतिपत्ति ( ज्ञान ) का तो फल श्रुत है। यद्यपि कर्म के प्रकरण में सृष्टि का प्रतिपादन किया गया है, तथापि उसे विधिस्तुत्यर्थ ही समझना चाहिये, ऐसा जैमिनि और शबरस्वामीने कहा है। अतः सृष्टियज्ञ आदि की कल्पना करके मुख्ययज्ञ में तदनुकरणत्व की कल्पना करने का व्यर्थ प्रयास तुमने किया है। कल्पना तुम्हें इस प्रकार करनी चाहिये की प्रसिद्धयज्ञातिरिक्त सभी यज्ञ गौण हैं।

यह जो पृ० १२६ पर कहा है कि 'इस सौर मण्डल का स्थितिकाल और प्रलयकाल (८ अरब ६४ करोड़ वर्ष) चतुःषष्टिकोटियुत अर्बुद वर्ष परिमित हैं' किन्तु इस तरह काल निर्धारण करना युक्तियुक्त नहीं है। क्योंकि यह दैनन्दिनकाल है। ब्रह्मा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वर्षाणि षण्णवतिसहस्रोत्तरद्वादशलक्षवर्षाणि । द्वापरयुगकालो देवमानेन सहस्रद्वयवर्षाणि । सन्ध्यासन्ध्यांससहितस्य द्वापरयुगस्य कालो देवमानेन २४०० वर्षाणि मानवमानेन चतुःषष्टिसहस्रोत्तराष्टलक्षवर्षाणि ८६४००० वर्षाणि । कलियुगकालश्च देवमानेन एकसहस्रवर्षपरिमितः । सन्ध्यासन्ध्यांशसहितस्य कलियुगस्य कालो देवमानेन १२०० वर्षाणि, मानवमानेन च ४३२००० द्वात्रिंशत्सहस्रोत्तरचतुर्लक्षवर्षाणि । सम्भूय च ४३२०००० वर्षाणि, अर्थाद् विंशतिसहस्रोत्तरत्रयश्चत्वारिंशद्वर्षाणि यावद् मानवमानेन १२००० वर्षाणि द्वादशसहस्रवर्षाणि च देवमानेन चतुर्युगी कालः । एषा चतुर्युगी देवयुगशब्देनोच्यते । यावता कालेन देवयुगं सहस्रधा परिवर्तते, अर्थाद् देवमानेन १२०००००० विंशतिलक्षोत्तरैककोटिवर्षपरिमितो मानवमानेन च ४३२००००००० द्वात्रिंशत्कोटयुत्तरवृन्दचतुष्कवर्षपरिमितः कालो ब्रह्मस्यैकस्याह्नः । एतपेव परिमाणं ब्रह्मरात्र्याः । ब्राह्माहोरात्रस्य कालस्तु देवमानेन २४०००००० वर्षाणि चत्वारिंशल्लक्षोत्तरकोटिद्वयवर्षपरिमितः, मानवमानेन च चतुःषष्टिकोट्युत्तरवृन्दाष्टवर्षपरिमितः । एतस्मिन् प्रमाणं तूपरिष्टान्मनोर्वचनमुद्धृतम् । एतदेवोक्तं ब्रह्मवैवर्तमहापुराणे प्रकृतिखण्डे ५४ अध्यायो, यथा—'कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ॥३३॥ दिव्यैर्द्वादशसाहस्रैः सावधाना निशामय । चत्वारि त्रीणि द्वे चैकं कृतादिषु यथायुगम् ॥ ३४ ॥ तेषां च सन्ध्या सन्ध्यांशौ द्वे सहस्रे प्रकीर्तिते । त्रिचत्वारिंशल्लक्षेण विंशत्सहस्राधिकेन च ॥ ३५ ॥ चतुर्युगं परिमितं नरमानक्रमेण च । सप्तदशलक्षमितमष्टाविंशत्सहस्रकम् ॥ ३६ ॥ नृमानेन कृतयुगं संख्याविद्भिः प्रकीर्तितम् । द्विषड्लक्षपरिमितं षण्णवतिसहस्रकम् ॥ ३७ ॥ त्रेतायुगं परिमितं कालविद्भिः प्रकीर्तितम् । अष्टलक्षपरिमितं चतुःषष्टिसहस्रकम् ॥ ३८ ॥ परिमितं द्वापरं च प्रोक्तं संख्या विपश्चिता । चतुर्लक्षपरिमितं द्वात्रिंशच्च सहस्रकम् ॥ नृमानाब्दं कलियुगं विदुः कालविपश्चितः ॥ ३९ ॥ यथा सप्त च वाराश्च तिथयः षोडशस्मृताः । दिवा रात्रिश्च पक्षौ द्वौ मासो वर्षं च निर्मितम् ॥ ४० ॥ यथा भ्रमति सततमेवमेव चतुर्युगम् । यथा युगानि राजेन्द्र तथा मन्वन्तराणि च ॥ ४१ ॥ मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः । एवं क्रमाद् भ्रमन्त्येव मनवश्च चतुर्दश ॥ ४२ ॥

यत्तु तत्र प्रलयारम्भेऽसुराणां ध्वंसनात्मिकाः प्रवृत्तय उत्तरोत्तरं वृद्धिं गच्छन्ति, प्रलयमध्ये ताः पूर्णतामुपयन्ति, ततो दैवीनां प्रवृत्तीनामुत्तरोत्तरं विकासे आसुरप्रवृत्तीनां चोत्तरोत्तरह्रासे वर्तमानसृष्टेः प्राक् प्रलयकाले आसुरप्रवृत्तिभिर्ध्वंसनात्मिका यज्ञा बभूवुः । अत एव प्रलयात्मका यज्ञा आसुरशक्तिज्ञानां सविधे आसन् । अत एव 'असुरेषु वै यज्ञ आसीत् । तं देवास्तूष्णीं होमेनापवृञ्जन्' ( तै० सं० ६।३।७ ) अर्थात् सर्गोन्मुखकाले दैवीभिः शक्तिभिः शनैः शनैः सर्जनरूपयज्ञारम्भः कृतः, एवं यज्ञोऽसुराणां हस्ताद् देवानां हस्तमुपगतः····इत्यादि, तत्सर्वं प्रलापमात्रमेव, ध्वंसस्य निर्माणस्य वा यज्ञपदवाच्यत्वे मानाभावात् । तथात्वे ध्वंसका अग्निदा गरदा लुण्टाका अपि याज्ञिकत्वेन धार्मिका एव व्यपदिश्येरन् । आधुनिका भौतिकास्तत्तदुत्पादकपालकध्वंसकयन्त्रादिनिर्माणपरायणा अपि याज्ञिका

की आयु के मास-वर्षात्मक काल का विचार करने पर मनुलिखित काल निश्चित होते हैं । युगकाल के अनन्तर उतनाही काल सन्ध्यांश काल होता है । इस प्रकार ब्रह्मा के अहोरात्र का काल देवमान से २४०००००० इतने वर्ष का होता है । और मानवमान से चतुःषष्टिकोटयुत्तरवृन्दाष्टवर्ष परिमित होता है । यह निर्दिष्ट काल परिमाण मनु से प्रमाणित है, यही बात ब्रह्मवैवर्तमहापुराण के प्रकृतिखण्ड ५४वें अध्याय में भी कही गई है ।

यह जो कहा है कि—'प्रलय के आरंभ में असुरों की विध्वंसात्मक प्रवृत्तियां उत्तरोत्तर बढ़ती रहती हैं, और प्रलय के मध्य में वे पूर्णता को प्राप्त होती हैं, पश्चात् दैवी प्रवृत्तियों का उत्तरोत्तर विकाश होता है और आसुर प्रवृत्तियां घटती जाती हैं । इस कारण वर्तमान सृष्टि से पूर्व प्रलयकाल में आसुरप्रवृत्तियों के कारण ध्वंसनात्मक यज्ञ हो रहे थे । अतएव प्रलयात्मक यज्ञ, आसुरशक्तिज्ञों के पास था । इसीका निर्देश तैत्तिरीयसंहिता ( ६।३।७ ) में किया है । अर्थात् सर्गोन्मुखकाल में दैवीशक्तियों ने शनैः शनैः सर्जनरूप यज्ञ आरंभ किया । इस रीति से यज्ञ, असुरों के हाथ से देवताओं के हाथ पहुँचा····इत्यादि'—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उच्येरन्। यत्र महाभारतादौ युद्धादिषु यज्ञत्वव्यपदेशः, तत्र तु कयाचिद्व्यपेक्षया गौण्यावृत्त्यैव तन्मन्तव्यम्। तैत्तिरीयवचने तु 'यत् तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते, इति तूष्णीमाघारस्य प्रशंसार्थमेवोक्तम्। तूष्णीं होमेनासुराणां यज्ञो देवैर्यथा वृक्तः, तथैव तूष्णीमाघाराघारेण भ्रातृव्यस्य यज्ञो वृज्यत इति। सायणरीत्या तु असुरा गूढचारिणो भूत्वा देवैरनुष्ठितमवगत्य स्वयमपि तथैवानुतिष्ठन्ति, 'देवा वा यद्यज्ञे अकुर्वत तदसुरा अकुर्वत' इति श्रुतेः। तं वृत्तान्तमवगत्य देवा गूढचारिणां समीपे प्रथममाघारममन्त्रकं हुतवन्तः। तं दृष्टवन्तोऽसुराः सहसा गत्वा कृत्स्नं यज्ञं तूष्णीं कृत्वा पराभूताः। तमभिप्रेत्य देवास्तूष्णीं होमेनाववृञ्जन्तेत्युच्यते।

यदपि च—'सर्गोन्मुखकाले दैवीनां प्रवृत्तीनां लघुत्वादासुरीणां च प्रवृत्तीनां महत्त्वात् श्लेषेण शतपथे 'कनीयसा एव देवा ज्यायसा असुराः, (श० १४।४।१।१) (पृ० १२७) इत्युक्तम्, तदपि तुच्छम्, तथात्वे सर्गमध्ये देवानां ज्यायस्त्वेनासुराणां कनीयस्त्वेन तदपाकरणप्रयासनैरर्थक्यापत्तेः, तादृशोपदेशस्य किञ्चित्कालिकत्वापत्तेश्च। वस्तुतस्तु नात्र ध्वंसशक्तयोऽसुरा निर्माणशक्तयो वा देवाः, ब्रह्मविद्याप्रकरणे तदनुपयोगात्।

प्रकृते देवानामसुराणां च प्राजापत्यत्वमुक्तम्। 'द्वया ह वै प्राजापत्या देवाश्चासुराश्च' न च प्रजापतेर्ध्वंसशक्तयोऽ-

वह सब प्रलापमात्र ही हैं, क्योंकि ध्वंस या निर्माण को 'यज्ञ' पद का वाच्यार्थ मानने में कोई प्रमाण नहीं है। ध्वंस को भी यज्ञ कहने पर अग्निद, गरद, लुण्टाक आदि ध्वंसकों में भी याज्ञिकत्व प्राप्त होने से उन्हें धार्मिक ही कहना होगा। निर्माण का 'यज्ञ' पद का वाच्यार्थ माननेपर आधुनिक भौतिकों को अर्थात् तत्तदुत्पादक, पालक, ध्वंसक यन्त्रादिनिर्माणपरायणों को भी याज्ञिक कहना होगा। महाभारतादिग्रन्थों में युद्धादिकों के लिये जो 'यज्ञत्व' व्यपदेश (व्यवहार-प्रयोग) किया गया है, वह सापेक्ष है, अर्थात् गौणी वृत्ति का आश्रय लेकर ही किया गया है। तैत्तिरीयवचन में जो कहा गया है, वह तूष्णी आघार की प्रशंसा के लिये ही कहा गया है।

यह जो कहा कि—'सर्गोन्मुखकाल में दैवी प्रवृत्तियाँ छोटी थीं, और आसुरी प्रवृत्तियाँ बड़ी थीं। इसको श्लेष से शतपथ में कहा है, पृ० १२७।' वह भी सारहीन है, क्योंकि सर्ग के मध्य में देवताओं के श्रेष्ठ रहने से और असुरों के कनिष्ठ रहने से उसके अपाकरण का प्रयास करना व्यर्थ ही है। तादृश उपदेश किञ्चित्कालिक ही कहा जायगा। वस्तुतः यहाँ पर न ध्वंसशक्तियों को असुर कहा गया है, और न ही निर्माणशक्तियों को देव कहा गया है, कारण यह है कि ब्रह्मविद्या का प्रकरण चल रहा है, उसमें उसका कोई उपयोग नहीं है। प्रकृत में देवता और असुरों को 'प्राजापत्य बताया गया है। प्रजापति की ध्वंसशक्तियों को असुर और निर्माणशक्तियों को देव, नहीं कह सकते, क्योंकि प्रजापति तो पालक हुआ करते हैं, उन्हें ध्वंसशक्तियों की अपेक्षा नहीं हुआ करतीं। शाङ्करभाष्य के अनुसार प्रजापति के अपत्य देव और असुर हैं। प्रजापति के प्राण वाक् आदि हैं। उनमें शास्त्रीयज्ञान और कर्म से सुसंस्कृत और उन्हें प्रकट करनेवाले देव कहलाते हैं, और जो स्वाभाविकप्रत्यक्षानुमानजनित दृष्टप्रयोजन से युक्त ज्ञानकर्म विशिष्ट हैं, वे असुर कहलाते हैं। अपने ही प्राणों में रमण करते रहने से 'सुर' कहलाते हैं, और उन सुरों (देवों) से भिन्न जो हैं, वे असुर कहलाते हैं। तथा वे अदृष्टप्रयोजनकज्ञान-कर्मभावित होने से 'कनीयस' कहलाये, वेही कानीयस कहे जाने लगे, (कनीयांस एव कानीयसाः, स्वार्थ में अण् और वृद्धि)। देवता तो अल्प ही हैं और असुर बहुत हैं। प्राणों की महत्तर ज्ञान-कर्म प्रवृत्ति का होना स्वाभाविक है। क्योंकि शास्त्रविहित कर्मज्ञान प्रवृत्ति का प्रयोजन 'अदृष्ट' होता हैं। इस कारण देवताओं का कनीयस्त्व हुआ। क्योंकि शास्त्रजनित प्रवृत्ति अल्प होती है। वह अत्यन्त यत्नसाध्य हुआ करती है। तथैव राग-द्वेष से होनेवाली प्रवृत्तियाँ असंख्य रहती हैं, किन्तु शास्त्रीयप्रवृत्तियाँ नियत रहती हैं' इस कारण देवों की संख्या भी अल्प है और असुरों की संख्या बहुत है। स्वाभाविकप्रवृत्ति, अयत्नसाध्य होती है, क्योंकि वह पूर्व से ही सिद्ध है। अवस्था में भी असुर जेष्ठ हैं। शास्त्रीयप्रवृत्ति, यत्नसाध्य होने से देवताओं में कनीयस्त्व है। तस्मात् यहां ध्वंस शक्तियाँ 'असुर' शब्द से अभिप्रेत नहीं हैं। और न ही उनकी ध्वंसप्रवृत्तियाँ ही 'यज्ञ' शब्द से अभिप्रेत हैं, तथैव न निर्माणशक्तियां अथवा निर्माणप्रवृत्तियाँ ही 'यज्ञ' हैं। यह सब युधिष्ठिर की निर्मूल कपोलकल्पना मात्र है। ध्वंस—निर्माणादि तो स्वाभाविक हैं, विधिप्राशस्त्यबोधन में उनका सर्वथा अनुपयोग है।

पृ० १२७ पर जो कहा गया है कि—'मानुष सर्ग के आरंभ में प्रजापति कश्यप की असुर और देवसंज्ञकसन्ततियाँ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुरनिर्माणशक्तयो देवा इति वक्तुं शक्यम्, प्रजापतेः पालकत्वेन ध्वंशशक्तीनामनपेक्षत्वात्। शाङ्करभाष्यानुसारेण तु वर्तमानप्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्यानि। के ते देवाश्चासुराश्च। प्रजापतेः प्राणा वागादयः। तत्र शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति। त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुरा भवन्ति। स्वेष्वेवासुषु रमणात् सुराः, देवेभ्योऽन्यत्वाद्वा असुराः।

यस्माच्च दृष्टप्रयोजनज्ञानकर्मभावितास्तस्मात् कानीयसाः। कनीयांस एव कानीयसाः। स्वार्थेऽणि वृद्धिः। अल्पा एव देवा ज्यायांसोऽसुराः। स्वाभाविकी हि ज्ञानकर्मप्रवृत्तिर्महत्तरा प्राणानाम्। शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः अदृष्टप्रयोजनत्वात्। कनीयस्त्वं देवानाम्। शास्त्रजनितप्रवृत्तेरल्पत्वात्। अत्यन्तयत्नसाध्या हि सा रागादीनां स्वाभाविकत्वेवैराग्यादीनांयत्नसाध्यत्वात्। तथैव रागद्वेषप्राप्तानां प्रवृत्तीनामसंख्यत्वात्, शास्त्रीयप्रवृत्तीनां नियतत्वात् संख्ययापि देवानामल्पत्वम्, असुराणाञ्च बहुत्वम्। स्वाभाविक्याः प्रवृत्तेरयत्नसाध्यत्वात् पूर्वत एव सिद्धत्वात्। वयसाप्यसुराणां ज्येष्ठत्वम्, शास्त्रीयप्रवृत्तेर्यत्नसाध्यत्वात् देवानां कनीयस्त्वम्। तस्मान्नात्र ध्वंसशक्तयोऽसुरा अभिप्रेताः। नवा तदीया ध्वंसप्रवृत्तय एव यज्ञाः, न वा निर्माणशक्तयो निर्माणप्रवृत्तयो वा यज्ञाः, निर्मूलत्वात् स्वाभाविकत्वाच्च, विधिप्राशस्त्यबोधने सर्वथाऽनुपयोगित्वाच्च।

यदपि च—'मानुषसर्गारम्भे कश्यपस्य प्रजापतेः असुरा देवाश्च पुत्रा आसन्, तेषु असुरा वयसा ज्येष्ठाः, ज्येष्ठत्वादेव ते पृथिव्याः शासका आसन्। 'असुराणां वा इयमग्र आस यावदासीन परापश्यति तावद्देवानां ते देवा अस्त्वेव नोऽस्यास्' (तै० सं० ६।२।४) इति, तदपि यत्किञ्चित्, सर्वस्यैतस्य वेदिविधानार्थवादत्वेन विधिशेषत्वात्। विध्यर्थस्तावकत्वेन स्वार्थे तात्पर्याभावात्।

यदपि च—'पूर्वं असुरैर्वर्णाश्रममर्यादा स्थापिता, यज्ञानाञ्च प्रवर्तनं कृतम् इति। प्रह्लादपुत्रेण कपिलेनासुरेण वर्णाश्रमविभागः कृतः, इति बौधायनधर्मसूत्रे (बौ०ध० सू०२।१२।३०) इत्यत्रोक्तम्, तत्रोदाहरन्ति—'प्राह्लादिर्वै कपिलो नायासुर आस। स एतान् भेदान् चकार देवैः स्पर्धमानः' (बौ० ध० सू० २।१२।३०) इति, 'देवा पराजिग्यमाना असुराणां वैश्यमुपायन्' सम्भाव्यते यत् असुराणां सम्पत्तीरधिकर्तुं तेषां वैश्यमुपागमन्' 'प्रजापति र्वै देवासुरानसृजत। तदनुयज्ञोऽसृज्यत, यज्ञं छन्दांसि। ते विश्वञ्चो व्यक्रामन्। सोऽसुराननुयज्ञोऽपाक्रामत। यज्ञं छन्दांसि' (तै० सं० ३।३।७) (पृ० १२८)। एतेन प्रथमं यज्ञोऽसुराणां पार्श्वं आसीत्। 'असुरेषु एषोऽग्रे यज्ञ आसीत्, सौत्रामणी स देवान् उपप्रैत' (श० १३।९।३।७) इति सौत्रायणीयागस्यासुरेषु सत्त्वमुक्तम्, यच्च देवानुपागत एतेनेदं सिद्ध्यति। देवा असुरेभ्य एव यज्ञान् प्राप्तवन्तः। पश्चाद्देवा यज्ञविद्यायामसुरेभ्योऽधिकं कौशलं प्राप्तवन्तः। अन्ततः यज्ञसम्बन्धे असुरादेवानन्वकुर्वन्—'देवा वै यत् यज्ञे अकुर्वत' (तै०सं० ६।४।६) (पृ० १२८) किञ्चित्कालानन्तरं यज्ञो देवेभ्यो मनुष्यानुपागमन्। ऐलः गन्धर्वेभ्योऽग्निविद्यारहस्यं ज्ञात्वा यज्ञस्यैकमग्निं त्रिधा विभक्तवान्। ऋषिभिः यज्ञस्य विधिक्रियाकलापानाम् सूक्ष्मता विविधता च परां काष्ठां प्रापिता। मनुष्येषु त्रेतायुगे यज्ञ प्रारम्भः। असुरेषु देवेषु च कृतयुगोत्तरार्धश्वयज्ञप्रारम्भः। अत एव भारतीयेतिहासानुसारेण नासुरा

थीं। उनमें 'असुर' वयसा ज्येष्ठ थे' और ज्येष्ठ होने से ही वे पृथ्वी के शासक हुए, अपने इस कथन में (तै० सं० ६।२।४) का प्रमाण दिया है।

किन्तु वह भी ठीक नहीं है, क्योंकि यह उपर्युक्त कथन, वेदिविधान का अर्थवादरूप है, अतः वह विधिशेष ही है। विध्यर्थ का स्तावक होने से उसका स्वार्थ में तात्पर्य नहीं है।

यह जो कहा है कि बौधायनधर्मसूत्र के अनुसार पूर्वकाल में वर्णाश्रम मर्यादा की स्थापना और यज्ञों का प्रवर्तन असुरों ने किया। इस मन्तव्य का समर्थन तैत्तिरीयसंहिता, शतपथब्राह्मण, पुराण, कौटलीय अर्थशास्त्र से भी हो रहा है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

राक्षसपिशाचतुल्या वैदिकमर्यादाविहीनाः, किन्तु पुरुषजा तावेव दवासुरमनुष्यभेदेन त्रीणि कुलान्यासन्। प्रारम्भे प्रजापतेः कश्यपात् दितौ अदितौ दनौ च यान्यपत्यानि जातानि तानि मातृनामभिः दैत्याः, आदित्याः, दानवाः आदि शब्दभाञ्जि जातानि। दैत्या एव भारतीयेतिहासे असुरा उक्ताः। पश्चात् दानवा अपि तत्सहयोगिनो जाताः। अदितेर्द्वादशपुत्राः। असुरा अपि प्रारम्भे श्रेष्ठाः सुचरित्रा आसन्। ज्येष्ठश्रेष्ठत्वाभ्याञ्च कश्यपेन शासनेऽधिकृतास्ते। एभिरेवासुरैर्वेदानुसारं वर्णाश्रमविभागः यज्ञप्रवर्तनञ्च विहितम्। लब्धे च निरङ्कुशे विशेषाधिकारे शनैः शनैः विकरोति जनमानसम्। इन्द्रादयोऽपि निरङ्कुशं शासनं प्राप्य अमर्यादितानि कर्माणि कृतवन्त इति पुराणादिषु स्पष्टम्। ऋषीणां व्यवस्थासु राज्ञां नियन्त्रणमुक्तम्। तेनैव वशिष्ठतुल्यसमर्थस्य नियन्त्रणे रघुकुलमासीत्। 'तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिवचानुवर्तेत' ( कौटलीयअर्थशास्त्र अधिकरण १ अध्याय ९ ) 'मर्यादां स्थापयेत् आचार्यान् अमात्यान् वा। य एनं अपायस्थानेभ्यो वारयेयुः। छायानालिकया प्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः।' ( कौटलीयअर्थशास्त्र अधिकरण १ अ० ७ पृ० १२९-१३० ) इति, तदपि यत्किञ्चित्, तथात्वेऽपि ब्राह्मणेष्वितिहासपुराणेषु चासुरराक्षसादीनां यज्ञादिबाधकत्वस्यैव बाहुल्येन श्रवणात्। अत एव तदपाकरणार्थं दर्भजलब्राह्मणाग्नीनामाश्रयणं दृश्यते। मन्त्रेष्वपि 'प्रत्युष्ट रक्षः' इति। तत्र तत्र तदपाकरणं दृश्यते। 'देवान् ह वै यज्ञेन यजमानांस्तानसुररक्षांसि ररक्षुर्न यक्ष्यध्वमिति तद्यद-रक्षंस्तस्माद्रक्षांसि' ( श० १।२।१।१६ ) 'ततो देवा एतं वज्रं ददृशुः यदपो वज्रो वा आपो वज्रो हि वा आपस्तस्माद्येनेता-यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ति निर्दहन्ति तद् एतं वज्रमुदयच्छंस्तस्याभयेऽनाष्ट्रेनिवाते यज्ञमतन्वत इत्येव-मादिरीत्या पदे पदे असुरराक्षसादीनां यज्ञबाधकत्वम् ( श० १।२।१।१७ ) 'देवा ह्वै यज्ञं तन्वाना स्ते असुर राक्षसेभ्यः आसङ्गाद् विभयाञ्चक्रुस्तद्यज्ञमुखोदेवैतन्नाष्ट्राः रक्षास्यपहन्ति' ( श० १।१।२।३ ) 'वृत्रो ह्वा इद सर्वं वृत्वा शिश्ये। तमिन्द्रो जघान सह पूतिः सर्वत एवापोऽभिसुस्राव'''तस्माद्दुहैका आपो बीभत्साञ्चक्रिरे ता उपर्युपर्यति पुप्रु विरेऽत एते दर्यास्ताहैता अनापूयिताः ( श० १।१।२।५ ) तैत्तिरीयकेऽपि 'इन्द्रो वृत्रमहत् सोऽपोऽभ्यम्रियत। तासां यन्मेध्यं यज्ञियं प्रसरदेवमासीत्तदपोदक्रामत ते दर्भा अभवत्' (तै० ब्रा० ३।२।५।१)। तस्माद्वा एताभ्यामुत्पन्नानि 'मनो ह वा ऋषभ आसीत् तस्मिन्नसुरघ्नी वाक् प्रविष्टा। तस्य ह स्म श्वसथादसुरराक्षसानि मुह्यमानानि यन्ति तेहासुराः समूदिरे पापं वत नोऽय-मृषभः स च त कथंन्विम दभ्नुयामेति' ( श० १।१।४।१३ )। सा यज्ञपात्राणि प्रविवेश, ततो हैनां न शेकुर्निहन्तु सैषासुरघ्नी सपत्नघ्नी वाग्वदति' ( श० १।१।४।१७ ) 'स समाहन्ति कुक्कुटोऽसि तस्मादसुरराक्षसादयो यज्ञविरोधिनः शक्तिविशेषा एव।

'देवाश्चासुराश्च उभये प्राजापत्याः पस्पृधिरे ततो देवा अनुव्ययिवासु रथ हा सुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति, ते होचुः हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति तामौक्षणैश्चर्मभिः पश्चात् प्राञ्चो विभजमाना अभीयुः तद्वै देवाः शुश्रुवुः विभजन्ते ह वा इमामसुराः पृथिवीं प्रेत तदेष्यामः''''ते होचुः नोऽस्यां पृथिव्यामाभजतांस्त्वेनोऽ-प्यस्यां भाग इति। ते हासुरा असूयन्त इवोचुर्यावदेवैष विष्णुरभिशेते तावद्वोददम इति वामनो ह विष्णुरास''''''' ( श० )

किन्तु यह कथन भी निःसार है क्योंकि ब्राह्मणादिवेद, इतिहास, पुराण आदि ग्रन्थों में जहाँ-तहाँ असुरों राक्षसों को यज्ञों के विघातक के रूपमें ही पाया जाता है।

मन्त्रों और ब्राह्मणों में असुर-राक्षसों के अनेक आख्यान अर्थवाद के रूप में भी उपलब्ध होते हैं, जिनका उपयोग, विधि की स्तुति के रूप में हुआ करता है। आश्चर्य तो इस बात का है कि यह दयानन्दानुयायी एक ओर तो ब्राह्मणों को वेद के व्याख्यानरूप मानता है और वेदों में इतिहास के होने का सर्वथा खण्डन करता है, और दूसरी ओर वेदव्याख्यानभूत ब्राह्मणों के सहारे तद्विरुद्ध इतिहास की कल्पना करता है। इधर दयानन्द ने तो विषसम्पृक्तमधुरान्न की तरह पुराणों को त्याज्य माना है। किन्तु उनके

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किं बहुना सर्वत्रैव मन्त्रेषु ब्राह्मणेषु च 'असुरराक्षसादीनामर्थवादरूपेणानेकान्याख्यानानि समुपलभ्यन्ते। तत्तद्विधिस्तुतावेव तेषां तात्पर्यम्। आश्चर्यमेतद्यदयं दयानन्दानुयायी ब्राह्मणानि वेदव्याख्यानानि मन्यते। वेदेषु चेतिहासं सर्वथा खण्डयति परं वेदव्याख्यानभूतानि ब्राह्मणान्याश्रित्य तद्विरुद्धमितिहासं कल्पयति। दयानन्दस्तु विषसम्पृक्तमधुरान्नमिव पुराणं त्याज्यं मनुते। अयं च पुराणाश्रयेणैव काल्पनिकमितिहासप्रासादं रचयति। सत्यम्, 'एकां लज्जां परित्यज्य सर्वत्र विजयी भवेद्' इति। यदि मन्त्रोक्तोर्वशीपुरूरवात्तेरन्यथार्थः कल्पयितुं शक्यते तदा ब्राह्मणपुराणादिवचनानामन्यथार्थकल्पने काबाधा? यदि तेषां नान्यथार्थः शक्यकल्पनस्तदा मन्त्रोक्तोक्तार्थान्यथाकरणदुराग्रहः कथं क्रियते। वेदानादित्वं तु भट्टपाद-शङ्कराचार्योक्तरीत्या सर्गप्रलयप्रवाहाङ्गीकारेण सिद्धयत्येव।

सिद्धान्तदृष्ट्या तु मन्त्रार्थवादानुसारेण चेतनावन्तः परमैश्वर्यवन्तो देवा यथाङ्गीक्रियन्ते तथैवासुरा अपि स्वीक्रियन्ते। यद्यपि वैदिक्य आख्यायिकाः सुखावबोधार्था नित्यत्वान्न घटनापूर्विकाः किन्तु विश्वसृष्टेः शब्दपूर्वकत्वाभ्युपगमात् आख्यायिकानुसारिण्यो घटना न निवार्यन्ते। ततश्च पुराणादिरीत्या ऐतिहासिका अपि प्रह्लादादयः सम्भवन्त्येव। असुरेष्वपि दैत्यादिषु प्रह्लादादयो भगवद्भक्ताः आस्तिका आसन्, अतस्तादृशेष्वसुरेषु यज्ञस्य सत्त्वं वर्णाश्रमव्यवस्थापकत्वं न विरुद्धम्। तावतापि सिद्धान्ते मन्त्रब्राह्मणात्मकस्य सर्वस्यैव वेदस्यानादित्वेन तत्प्रतिपादितयज्ञवर्णाश्रमादीनां नव्यक्तिविशेषजातिविशेषकर्तृकत्वम्, किन्तु कदाचिद् कदाचित् प्रचारवैरल्ये जाते तत्प्रचारकत्वमेव मन्तव्यम्। परमेश्वरस्यापि वेदकर्तृत्वं नाम सर्गादौ तत्सम्प्रदायप्रवर्तकत्वमेव, नित्ये वेदेऽन्यादृशस्य कर्तृत्वस्य सम्भवात्। तथा सति केषाञ्चिदसुराणां यज्ञवर्णाश्रमरक्षकत्वेऽपि यज्ञादिबाधकत्वेन बाहुल्येन व्यपदेशा भवन्तीति न्यायेन व्यपदेशात्। तत्र तु ब्राह्मणेषु तेषां निराकरणाय उपाया आश्रियन्ते। सायणाचार्यस्य प्राचीनेतिहासानभिज्ञत्वोक्तिस्तु युधिष्ठिरस्य क्षुद्रत्वमेव बोधयति। त्वत्कल्पितेतिहासस्य त्वन्मतेनैव विरोधात्। 'असुराणामियमग्र आसीद्' इत्यादितैत्तिरीयवचनानां तु वेदिविधानार्थवादत्वमेव। पूर्वोक्तशतपथवचनस्यापि तत्रैव तात्पर्यम्। सायणाचार्येण शतपथभाष्ये तदभिप्राय एवमुक्तः। देवाश्चासुराश्च स्पर्धां कृतवन्तः। स्पर्धमानानां तेषां मध्ये देवास्ततः तेभ्योऽसुरेभ्यो ऽनुव्यम् अनुगमनं न्यग्मूर्तिं प्राप्ता इव बभूवुः।

अनुयायी ये युधिष्ठिरजी, अपने गुरु दयानन्द के द्वारा परित्यक्त किये गये उन्हीं पुराणों का आश्रय लेकर काल्पनिक इतिहास के प्रासाद का निर्माण करने में प्रयत्नशील रहा करते हैं। एक दृष्टि से इनका इस प्रकार आचरण ठीक ही है, क्यों कि 'एकां लज्जां परित्यज्य सर्वत्र विजयी भवेत्' यह कहावत प्रसिद्ध ही है। यदि मन्त्रोक्त ऊर्वशी-पुरूरवा के अन्य अर्थ की कल्पना की जा सकती है, तो ब्राह्मण-पुराणादि के वचनों के अन्यअर्थ की कल्पना करने में कौन सी बाधा सामने आती है? यदि ब्राह्मण-पुराण आदि के अन्यर्थ की कल्पना नहीं कर सकते तो मन्त्रोक्तअर्थ के अन्यथाकरण का दुराग्रह क्यों कर रहे हो? वेद का अनादित्व तो भट्टपाद-शङ्कराचार्य की रीति से सर्ग-प्रलयप्रवाह का अङ्गीकार करके सिद्ध हो ही जाता है।

सिद्धान्तदृष्ट्या तो मन्त्रार्थवाद के अनुसार चेतनावान् और परमैश्वर्यवान् देवताओं का अंगीकार किया जाता है, तथैव असुरों का भी स्वीकार किया जाता है। यद्यपि वैदिक आख्यायिकाएँ सुखावबोधार्थ हैं, वे नित्य हैं, अतः घटनापूर्वक नहीं हैं, तथापि विश्वसृष्टि को शब्दपूर्वक माना जाता है, अतः आख्यायिकाओं के अनुसार जो घटनाएँ हैं, उनका निवारण नहीं किया जा सकता। ततश्च पुराणादि के अनुसार ऐतिहासिक प्रह्लादादिकों का होना भी संभव हैं। दैत्यादि असुरों में भी प्रह्लादादि, भगवद्भक्त और आस्तिक थे। अतः इस प्रकार के असुरों के यहाँ यज्ञ का सत्त्व एवं उनमें वर्णाश्रमव्यवस्थापकत्व का होना कोई विरुद्ध नहीं है। ऐसी आख्यायिकाओं से भी अनादि मन्त्र-ब्राह्मणात्मक सम्पूर्ण वेद एवं तत्प्रतिपादित यज्ञ, वर्णाश्रमादिकों में किसी व्यक्तिविशेष या जातिविशेषकर्तृकत्व सिद्ध नहीं हो पाता। कदाचित् प्रचार के विरक्त होनेपर उन्हें तत्प्रचारक ही मानना चाहिये। परमेश्वर में जो वेदकर्तृत्व श्रुत हैं, वह भी तत्सम्प्रदायप्रवर्तकत्वरूप ही है। क्योंकि नित्य वेद का अन्यादृश कोई कर्ता नहीं हो सकता। तथा सति कुछ असुर, वर्णाश्रम और यज्ञ के रक्षक होने पर भी यज्ञादि में बाधा उत्पन्न करनेवाले अधिक थे, अतः 'बाहुल्येन व्यपदेशा भवन्ति'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ हते ऽसुरा मन्यन्ते स्म । इदं सर्वं जगदस्माकमेवेति । यतो देवा एवं न्यग्भूताः । अतो निष्प्रत्यूहं वयं इमां पृथिवीं विभजामहे यथाभागं विभजामेति । एवमुक्त्वा तैश्चर्मभिः प्रतीचीं दिशमारभ्य प्राचीमभिजग्मुः । देवाश्च तेष्वेवं कृतवत्सु अस्माकं तूष्णीमवस्थानमनुचितमिति अस्माभिरपि प्रयतितव्यम् इति विचार्य देवा अपि यज्ञात्मकं विष्णुं पुरोधाय गतवन्तः । गत्वा च अस्यां पृथिव्याम् अस्माकमपि भागो भवतित्युक्तवन्तः । तेहासुराः असूयां कुर्वन्तः असहमाना यावन्तं देशं विष्णुर्व्याप्य वर्तते तत्परिमितस्थानं युष्मभ्यं प्रयच्छाम इत्युक्तवन्तः । देवास्तदङ्गीचक्रुः । विष्णुर्हि तदानीं वामनः खर्वो बभूव । अत एवासुरास्तेनाक्रान्तं स्थानं प्रयच्छाम इत्यब्रुवन्, तथापि नानादृतं चक्रुः । विष्णुर्हि यज्ञः । अतो यज्ञसम्मितं स्थानमस्मभ्यं दत्तवन्त इति परिजगृहुः । तं विष्णुं प्राञ्चं प्राक् शिरसं निपात्य दक्षिणतः पश्चादुत्तरतश्च गायत्र्यादिछन्दोभिः सर्वतः पर्यगृह्णन् । तं विष्णुं गायत्र्यादिछन्दोभिः सर्वतः परिगृह्य पूर्वस्यां दिशि आहवनीयाख्यमग्निं प्रज्वाल्य तेन विष्ण्वात्मकेन यज्ञेन पूजयन्तः श्राम्यन्तश्चेरुः । तेन यज्ञात्मकस्य विष्णोराधारभूतेन स्थानेन देवाः सर्वामिवेमां पृथिवीं सम्यगालभन्त । अतो विद्यते लभ्यतेऽनेनेति वेदिर्यज्ञस्थानमिति वेदिनामनिर्वचनेन वेद्याः सर्वपृथिवीलाभरूपत्वम् । अतो यत्परिमाणविशिष्टा वेदिः तत्परिमाणैव पृथिवीति । तदेतत्सर्वं तं छन्दोभिरभितः परिगृह्य अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुः, तेनेमां सर्वां पृथिवी समविन्दन्तैव ह वा तद्यदेनेनेमा सर्वा समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमा सर्वा समविन्दन्तैव ह इमा सर्वा सपत्नाना सम्वृङ्क्त निर्भजत्यस्यै सपत्नान् य एवमेतद्वेद' (श० १।२।५।७) इति ॥

वस्तुतस्तूक्तानमेव ब्राह्मणानामर्थं वेदार्थं युधिष्ठिरो न तदभिप्रायस्, नास्तिक्यास्तेषु प्रामाण्यबुद्ध्यभावात् । यज्ञानां खण्डनायैव तेषामुपयोगमयं करोति । बहवोऽद्यत्वे महाभाष्यानुसन्धातारो महाभाष्यस्य गम्भीराशयमज्ञात्वा तत्रेतिहासमेवान्वेषते । तथैवायं ब्राह्मणानामभिप्रायमज्ञात्वा नामोल्लेखमेव दृष्ट्वा पाश्चात्या इवेतिहासमन्वेषते । यज्ञानुपूर्वमसुराणामेवासीन्तत एव देवा यज्ञप्राप्नुवन्त इत्यस्य समाधानेन यततूष्णीमाधा रमाधारयति भ्रातृव्यस्यैतद्यज्ञं वृङ्क्ते इति तूष्णीमाधारस्य प्रशंसार्थमेवोक्तमिति पूर्वमेवोक्तम्, यदपि यस्मिन् काले पृथिव्याः सलिलावस्थायाः पश्चात् संसारस्योच्चतमो भागः त्रिविष्टप ( तिब्बत )स्थानम् जलाद्बहिरभिव्यक्तम् प्राणिनामुत्पत्तियोग्यं जातम्, तात्कालिकस्य वृत्तान्तस्येदंवर्णनम् । देवाश्चासुराश्च अत्रत्या एव शासका आसन्' इति, तदपि सर्वं निर्मूलमेव, तादृशार्थबोधकस्य वचनस्यात्र प्रघट्टकेऽभावात् । 'देवानामसुराणां न्यूनातिन्यूनं शतत्रयवर्षाणि यावत् युद्धं संवृत्तम्' इत्येतदपि निर्मूलमेव, त्रिविष्टप—तिब्बत-

इस न्याय से असुरादि कों को यज्ञ विघातक कहा गया है । ब्राह्मणादि वेद ग्रन्थों में उन असुरों के निराकरणार्थ उपाय भी बताये गये हैं । सायणाचार्य जैसे महान् पण्डित को प्राचीन इतिहास से अनभिज्ञ बताकर युधिष्ठिर मीमांसक ने अपनी क्षुद्रता का ही परिचय दे दिया है । क्योंकि तुम्हारे कल्पित इतिहास का तुम्हारे ही मत के साथ विरोध हो रहा है । 'असुराणामियमग्र आसीत्' इत्यादि तैत्तिरीय वाक्य तो वेदविधान का अर्थवादरूप हैं । पूर्वोक्त शतपथवाक्य का भी उसी में तात्पर्य हैं । सायणोक्त अभिप्राय को मूल संस्कृत में समझा जा सकता है । किन्तु युधिष्ठिर मीमांसक अपनी नास्तिकता तथा ब्राह्मणग्रन्थ में अप्रामाण्य बुद्धि के कारण वास्तविक अभिप्राय को समझ नहीं पाये, और यज्ञों के खण्डन में ही उनका उपयोग कर रहे हैं । आजके युगमें महाभाष्यका अनुसन्धान करने वाले बहुत से लोग महाभाष्य के गंभीर आशय को बिना जाने उसमें इतिहास को ही खोजते रहते हैं । अतः तिब्बत को ही त्रिविष्टप कहना तथा देव तथा असुरों को यहाँ के शासक कहना आदि सब कथन निर्मूल है । देवासुर संग्राम की कम से कम तीन सौ वर्ष तक चलते रहने की बात भी निर्मूल है । त्रिविष्टप् और तिब्बत शब्दों का साम्य तो स्वजन और श्वजन, सकृत और शकृत् आदि शब्दों की तरह भ्रान्तिमूलक ही है । ब्राह्मण-पुराण आदि ग्रन्थों में त्रिविष्टप् शब्द को स्वर्ग का बोधक बताया है ।

सच बात तो यह है कि ब्राह्मण, आरण्यक, उपनिषत्, पुराण यज्ञ आदि से विरोध रखने से उनके अभिप्राय को ये समाजी समझ नहीं पा रहे हैं । पदे पदे ( पग-पग पर ) ये बेचारे ठोकर खा रहे हैं । देव और असुरों को पुरुषजातीय मनुष्य समझना, उनमें



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यनयोः शब्दसाम्यन्तु स्वजन स्वजन सकृत् शकृत् आदिशब्दानामिव भ्रान्तिमूलकमेव । त्रिविष्टपशब्देन ब्राह्मणेषु पुराणेषु च स्वर्गादीनां बोधनात् ।

वस्तुतस्तु ब्राह्मणारण्यकोपनिषत्पुराणयज्ञादिविरोधादेव ब्राह्मणानां पुराणानां यज्ञानाञ्चाभिप्रायमयं ज्ञातुं न पारयति । पदे पदे च स्खलति । देवासुरा मनुष्या पुरुषजातीया एव कुलभेद एव तेषा मित्यप्यशुद्धमेव, पूर्वमेव तेषां भेदस्य योनिभेदस्य च प्रतिपादितत्वात् । निरङ्कुशत्वञ्च सर्वत्रैव निन्द्यम्, वेदशास्त्रनियन्त्रितजीवनस्यैव शिष्टसम्मतत्वात् ।

देवा असुराणां वैश्यमुपायन्निति पाठस्त्वशुद्ध एव वेशत्वमुपायन्नित्यस्यैव पाठस्य सत्त्वात् ।

आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुः, नालम्भाय प्रक्रियन्तेस्म । ततो दक्षयज्ञप्रत्यवरकालं मनोः पुत्राणां नारिष्यन्नाभागेक्ष्वाकुनृगशर्यात्यादीनां च क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमवापुः ।' ( चरके चिकित्सा-स्थान १९।४ ) इति रीत्या त्वयापि आलभ आलम्भ । इति स्वतन्त्रं धातुद्वयमङ्गीकृत्य आलम्भस्य हिंसार्थोऽङ्गीकृत एव । अत्र यदुक्तम्—'पाणिनीयव्याकरणरीत्या शभिन्ने अजादिप्रत्यये परे 'लभेश्च' ( पा० सू० ७।१।६४ ) इत्यनेन सम्आङ् पूर्वकस्य लभधातोरनीयर्प्रत्ययेपरे नुमागमेन समालम्भनीयपदनिष्पत्तिर्भवति । आलम्भाय इत्यत्रापि प्रोक्तनियमा-नुसारेण आङ्पूर्वस्य लभते र्घञिनुमिरूपसिद्धिः । चरकसंहितायां नुम्रहितसमालभनीयनुम्सहितालम्भपदप्रयोगेण स्वतन्त्र-रूपेण लभ्लभिस्वतन्त्रधातुद्वयमङ्गीकरणीयम् । उत्तरकाले यदा लम्भप्रयोगा अधिकांशतया नष्टास्तदा पाणिनिप्रभृति-भिर्वैयाकरणैर्लम्भधातोर्निष्पन्नानां पदानां भाषायामल्पावशिष्टत्वात् लभधातोर्नुमागमान्वाख्यानं कृतम् । अनया

केवल कुलभेद है कहना, यह सब अशुद्ध है । उनकी भिन्नता और उनकी योनियाँ भिन्न हैं, यह पूर्व बता चुके है । बिना अंकुश की बाते करतें रहना निन्दनीय समझा जाता है । वेद-शास्त्र से नियन्त्रित जीवन को ही शिष्टसम्मत कहा जाता है ।

'देवा असुराणां वैश्यमुपायन्' यह पाठ भी अशुद्ध है, 'वैशत्वमुपायन्' यही पाठ वास्तुतः है ।

'आदिकाल में यज्ञों में पशु' समालभनीय हुआ करते थे । उनका 'आलम्भन' नहीं किया जाता था' आदि । किन्तु चरक के चिकित्सास्थान के अनुसार तुमने भी 'आलभ' और 'आलम्भ' इन दो धातुओं को भिन्न भिन्न मानकर 'आलम्भ' को हिंसार्थक स्वीकार किया है । पुनश्च पूर्वकाल, उत्तरकाल को बताते हुए अपनी कपोलकल्पना की उड़ान लगाकर दोनों धातुओं को एक कर दिया । किन्तु यह निर्मूल है । क्योंकि आगमविधि के अनित्य होने से 'समालभनीया' इस प्रयोग की उपपत्ति लग जाती हैं, इसीलिये वैयाकरणों ने धात्वन्तर की कल्पना करने के गौरव का स्वीकार नहीं किया । किञ्च मीमांसकों ने शब्दार्थसम्बन्ध को नित्य माना हैं, अतः पूर्वोत्तर कालभेद से अर्थभेद की कल्पना करना अनुपयुक्त है । एक ही आङ्पूर्वक लभ धातु का प्रकरण के अनुसार हिंसा और स्पर्श इन दो भिन्न अर्थों के समझने में कोई बाधक नहीं है । जैसे 'व्रीहिभिर्यजेत' यहां पर अर्थापत्तिप्रमाण से 'व्रीहि' से व्रीहिनिष्पत्ति का आक्षेप किया जाता है तथा 'व्रीहीनवहन्ति' में नियम माना जाता है, उसीतरह 'अग्नीषोमीयं पशुमालभेत' यहां पर 'यज्ञ' को प्रतीति होती है । उसमें स्वरूपतः 'पशु' याग का अंग नहीं होता, किन्तु तत्तद् होमीय अंगप्रकृतित्वेन उसका याग में उपयोग किया जाता है । अतः यहां पर 'आलभ' का अर्थ विशसन ही किया जाता है । किन्तु 'ब्रह्मणे ब्राह्मणमालभेत' यहां पर पर्यग्निकरण के अनन्तर ब्राह्मण का उत्सर्ग ही किया जाता है । क्योंकि पुरुषमेध में अवदान आदि का श्रवण नहीं है । तुमने अपने पक्ष की सिद्धि के लिये जिनका सहारा लिया था, उन्हीं का खण्डन अब कर रहे हो । तुम या तुम्हारे बन्धुगण, कात्यायन आश्वलायन को ब्राह्मणको मीमांसासूत्रों को प्रमाण नहीं मान रहे हो । तब केवल लोकवंचनार्थ क्यों उनके नामों की दुहाई देते रहते हो ।

'दक्षिणासमाधिहृदयमालभते' इत्यादि अनेक स्थलों में 'आलम्भ' शब्द का 'स्पर्श' आदि अर्थ हुआ करता हैं, यह बात सनातनधर्माचार्यो ने जहां तहां प्रदर्शित की है । 'आलम्भ' शब्द का अर्थ 'हिंसा' है ही नहीं, यह कहना तो निर्मूल ही है । क्योंकि उस अर्थ को तुमने ही चरकमें किया हुआ बताया है । हिंसार्थक उस प्रकार के प्रयोगों को उत्तरकालिक कहना भी असंगत है । क्योंकि 'अग्नीषोमीयं पशुमालभेत' ( तै० सं० ६।१।११।६ ) हिंसार्थक प्रयोग तो श्रुति में भी प्रदर्शित किया गया है । इस श्रुति वचन को भी यदि उत्तरकालिक कहो, तो वह कहना नास्तिक्यमूलक ही कहा जायगा । क्योंकि 'नास्तिको वेदनिन्दकः' यह मनु कहते हैं ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धात्वैक्यकल्पनया आलम्भधातोर्योऽर्थ आसीत् स एव आलभधातोरप्यर्थः स्वीकृतः। तत एवोत्तरकाले आलभते, आलभेत इति पदानां आलम्भनं कुर्यादितिव्याख्या सञ्जाता।' (पृ० १३३) इति, तदपि यत्किञ्चित् निर्मूलत्वात्। आगमविधेरनित्यत्वादेव समालभनीया इति प्रयोगोपपत्तौ धात्वन्तरकल्पनागौरवस्य वैयाकरणैरनङ्गीकारात्। किञ्च मीमांसकैः शब्दार्थसम्बन्धस्यौत्पत्तिकत्वाङ्गीकारेण पूर्वोत्तरकालभेदेनार्थभेदकल्पनानुपपत्तेश्च। एकस्यैवालभतेः प्रकरणानुसारेण हिंसास्पर्श इति भिन्नार्थाङ्गीकारे बाधाभावाच्च। यथा व्रीहिभिर्यजेतेत्यत्र व्रीहीणां पुरोडाशप्रकृतित्वेन यागाङ्गत्वश्रवणात्। पुरोडाशप्रकृतित्वान्यथानुपपत्त्या व्रीहिनिष्पत्तिराक्षिप्यते 'व्रीहीनवहन्ती'त्यवघातेनैव तण्डुलनिष्पत्तिं कुर्यात् न तु नखविदलनादिनेति नियमोऽभ्युपेयते, तथैव 'अग्नीषोमीयं पशुमालभेतेत्यत्र' अपूर्वद्रव्यदेवताश्रवणेन देवतोद्देश्येन द्रव्यत्यागरूपो यज्ञो विज्ञायते। पशोर्यागाङ्गत्वं न स्वरूपेण किन्तु 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अत वक्षसः, इति तत्तदङ्गानामवदानश्रवणात्। छागस्य मेदसो वपाया अनुब्रूहीति वपाहोमश्रवणाच्च। तत्तद्धोमीयाङ्गप्रकृतित्वेनैवोपयोगः सिद्धयति। तदर्थञ्च विशसनं लभतेरर्थः गृह्यते 'ब्रह्मणे ब्राह्मणमालभेते'त्यादौ तु पुरुषमेधेऽवदानाद्यश्रवणात्, पारम्पर्येण कात्यायनादिरीत्या पर्यग्निकरणानन्तरं ब्राह्मणादीनामुत्सर्ग एवभवति।

यच्च 'बृंहेरच्यनिटि। बृंहेरच्यनिटि उपसंख्यानं कर्त्तव्यम्। निबर्हयति, निबर्हकः। अचि इति किमर्थम्? निवृंह्यते। अनिटि इति किमर्थम्? निर्वृंहिता, निर्वृंहितुम्। तत्तर्ह्युपसंख्यानं कर्त्तव्यम्? न कर्त्तव्यम्। बर्हिः प्रकृत्यन्तरम्, कथं ज्ञायते? अचीति लोप उच्यते, अनजादावपि दृश्यते-निवृह्यते। अनिटीत्युच्यते, इडादावपि दृश्यते निर्बर्हिता, निर्बर्हितुम्। अजादावित्युच्यतेऽजादावपि न दृश्यते निवृंहयति, निबृंहकः' (म० भा० १।१।४) (पृ० १३२) इति महाभाष्यमुद्धृत्य इड्भिन्ने अजादिप्रत्यये परे बृंह इत्यस्यानुनासिकलोपो भवति यथा निबर्हयति, निबर्हकः। अचीति किमर्थमुक्तम्? निवृंह्यते इत्यत्र यकि परे यथा लोपो नस्यात्। इड्भिन्ने इति विशेषणम् किमर्थम्? निर्वृंहिता, निर्वृंहितुम् अत्र इट् परे यथा लोपो नस्यात्। तथा सतीदं वार्तिकं कर्त्तव्यमिति पूर्वपक्षयन् महाभाष्यकारः 'बृहिः' इति प्रकृत्यन्तरं कल्पयित्वा वार्तिकं प्रत्याचख्यौ। कुतः प्रकृत्यन्तरं कल्प्यते इति तत्राह कथं ज्ञायते वार्तिकेन अचि परे लोपो विधीयते परन्तु अनजादौ प्रत्यये परेऽपि अनुनासिकलोपो दृश्यते यथा निबृह्यते इति। इड्भिन्ने अजादौ प्रत्यये अनुनासिकलोपो वार्तिक उक्तः, परन्तु इट्परेऽपि लोपो दृश्यते यथा निर्बर्हिता निर्बर्हितुम्, वार्तिकेन अजादौ अनुनासिकलोपः क्रियते, किन्तु अजादौ प्रत्ययेऽपि लोपो न दृश्यते यथा निवृंहयति, निवृंहकः। इति प्रकृत्यन्तरकाल्पननियमोऽत्यन्तं स्पष्टः। तद्वदेव 'लभेश्च' (पा० सू० ७।१।६४) 'आङो यि' (पा० सू० ७।१।६५) इति सूत्राभ्याम् लभधातोः शपि लिड्भिन्ने अजादौ प्रत्यये च सति नुमागमो विधीयते। तेन लम्भयति लम्भकः, तथा आङुत्तरलभेः यकारादिप्रत्यये सति नुमागमो यथा—आलम्भ्या गौः, आलम्भ्या बडवा' इति तत्र प्रथमनियमानुसारम् लभधातोरनीयरिप्रत्यये नुमागमेन 'लम्भनीये'ति प्रयोगेण भाव्यम्। परन्तु चरकसंहिताया उद्धृते (१९।४) स्थले 'समालभनीयाः' इति नुमभावविशिष्टप्रयोगदर्शनात्, द्वितीयनियमानुसारम् यति ण्यति वा प्रत्यये आलंभ्या' इति प्रयोगेण भाव्यम्, परन्तु काशिकायां (१।१।७५) 'अग्निष्टोम आलभ्यः' इति उद्धरणे नुमभावविशिष्टप्रयोगदर्शनात् प्रकृत्यन्तरं कल्पनीयम्। पाणिनीयव्याकरणादपि प्राचीने काशकृत्स्नधातुपाठेडुलभष प्राप्तौ, (१।५६४) 'लभिधारणे'

मन्त्र-ब्राह्मणसमुदाय की 'वेद' संज्ञा तो अनादिकाल से चली आ रही है। कोषकारों को भी यह बात पूर्णरूपेण सम्मत हैं, जैसे— मेदिनीकोष में 'ब्राह्मणो ब्रह्मजातौ स्याद् वेदभागे नपुंसकम्', और अमरकोष में 'श्रुतिः स्त्री वेद आम्नायः' विश्वकोष में 'श्रुतिः श्रोत्रे तयाम्नाये वार्तायां श्रौतकर्मणि' इति।

पृ. १३५ पर अग्नि-पशु का आलम्भन और उससे यज्ञ' यह शीर्षक देकर जो तुमने कहा है कि अग्नि को ही पशु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

( १।३६२ ) इति स्वतन्त्रधातुद्वयपाठदर्शनात्। प्राप्त्यर्थकस्य धातो रूपं लभते लभनमिति, धारणार्थकस्य रूपं लम्भति लम्भनमिति' ( पृ० १३३ ) आलभते, आलभेत इति शब्दाश्रितो यूयान् शब्दजाल उपस्थापित इति, तदपि निरर्थकम्, सर्वत्रालम्भनशब्दस्य वध एवार्थं इतियाज्ञिके रप्यनुक्तत्वेनानुक्तोपालम्भात्। 'कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतानि ( का० श्रौ० सू० २०।६।९ ) इति कपिञ्जलादीनामुत्सर्गोक्तेः। 'तेष्वारण्याः सर्वे उत्स्रष्टव्या नतु हिंस्या' इति उव्वटमहीधराद्युक्तेः। 'ब्रह्मणे ब्राह्मणमालभते' (वा० सं० ३०।५-२२) इत्यादिषु कपिञ्जलादिवत् उत्सृजन्ति ब्राह्मणादीन् (का० श्रौ० सू० २१।१।११) इति कात्यायनसूत्रात् पर्यग्निकरणानन्तरम् इदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथास्वं देवतोद्देश्येन त्यागः। ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजन्ति' ( महीधरभाष्ये ) इत्यादिवचनैर्याज्ञिकैरपि तथाभ्युपगमात्। त्वया तु स्वपक्षसिद्धये येषामाश्रयणं स्वप्रतिकूलतावसरे तेषामेव खण्डनं विधीयते। न च त्वया त्वदीयैर्वा कात्यायनाश्वलायनादि-सूत्राणि ब्राह्मणानि मीमांसासूत्राणि वा प्रमाणानि मन्यन्ते। ततश्च व्यर्थमेव तेषामाश्रयणम् लोकवञ्चनपर्यवसायित्वात्।

दक्षिणासमाधिहृदयमालभते अनेकत्र आलम्भशब्दस्य स्पर्शादयोऽर्था भवन्ति, इति सनातनधर्माचार्यैरेव तत्र तत्र प्रदर्शिताः। आलम्भशब्दस्य हिंसार्थ एव नास्तीत्युक्तिर्निर्मूलैव, नालभ्भायेति चरके त्वयैव तदर्थस्य प्रदर्शितत्वात्। हिंसार्थस्तादृशप्रयोगा उत्तरकालिका इत्यप्यसङ्गतम् 'अग्नीषोमीयं पशुमालभेत' इति श्रुतावपि तादृशप्रयोगदर्शनात्। नच तदपि वचनमुत्तरकालिकम्, तादृशोक्तेर्नास्तिक्यमूलकत्वात्। 'नास्तिको वेदनिन्दकः' इति मनूक्तेः। मन्त्रब्राह्मणसमुदायस्य वेदत्वानादित्वाभ्युपगमात्। कोषकारैरपि 'तथाभिप्रेतम्' तथाहि 'मेदिनीकोषे'—'ब्राह्मणो ब्रह्मजातौ स्याद्वेदभागे नपुंसकम्।' इति॥ अमरकोषे च—'श्रुतिः स्त्रीवेद आम्नायः इति विश्वकोषे च श्रुतिः 'क्षेत्रे तथाम्नाये वार्तायां श्रौतकर्मणि।' इति। यदपि 'अग्निपशोरालम्भनं तेन च यज्ञः' ( पृ० १३५ ) इति शीर्षकेणोक्तम्। 'अग्निः पशुरासीत् तेनायजन्त' ( वा० सं० २३।१७ ) इति मन्त्रार्थद्योतकं 'अग्निः पशुरासीत्, तमालभन्त, तेनायजन्त, इति च ब्राह्मणम्' ( नि० १२।२४ ) इति निरुक्तोद्घृतब्राह्मणेन अग्नेः पशुप्वम्, तेन यजनञ्चेति, तत्खण्डनं तु पूर्वमेव कृतम्। अग्नेः पशुत्वं तु प्रत्यक्षविरुद्धमेव।

मानकर, उससे यज्ञ किया गया' उसका खण्डन तो पहले ही किया जा चुका है। पहले तो 'अग्नि' को पशु कहना ही प्रत्यक्षविरुद्ध है। दूसरी बात—निरुक्त का जो संकेत दिया गया हैं, वह भी शुद्ध नहीं है। दुर्गाचार्य ने निरुक्त जो अर्थ किया है, उसे अच्छी तरह समझो।

पृ. १३५ से १३८ तक जो तुमने देवताओं के द्वारा अग्नि-पश्वालम्भनकर अनुष्ठित यज्ञ का वर्णन प्रदर्शित किया है, वह भी भोली-भाली जनता की प्रतारणा करने के उद्देश्य से ही किया है। यह समझने की बात है कि प्रकृति के परिणाम आदि को भी यज्ञ कहोगे तो लौकिक भोजन-पानादिव्यापारों को भी 'यज्ञ' शब्द से कहना होगा। अग्नि, वायु, सूर्य आदि को पशु कहना तो प्रत्यक्षविरुद्ध है। ज्ञान आदि में जैसे 'यज्ञ' शब्द का व्यवहार किया जाता है, उसी तरह वह व्यवहार किया गया है। जल या पञ्चतन्मात्राएँ जड़ होने से वे स्वतन्त्ररूप से कुछ कर ही नहीं सकतीं। उन्हें तो परमेश्वर अपनी शक्ति से यथेष्ट परिणत करता है। जड़ पदार्थों में दर्शनक्षमता हो नहीं सकती। तुमने भी पृ. १३६ पर परमेश्वर की शक्ति से ही उनमें चेतन के समान उपचार को माना है। उसी तरह इस प्रसंग में भी यज्ञत्व को औपचारिक ही समझना चाहिये। जैसे औपचारिक सिंह से मुख्य सिंह भिन्न ही रहता है, उसी तरह तुम्हारे कल्पित औपचारिक यज्ञ से वैदिकों का मुख्ययज्ञ भिन्न ही है। अतः अन्यान्य पदार्थों में की गई पशुत्व-यज्ञत्वादि की कल्पना को केवल विधिस्तुत्यर्थ ही समझना होगा। मन्त्र का अर्थ' सायणाचार्य ने जो किया है, वही शुद्ध एवं यथार्थ है। उसी तरह 'तस्माद् यज्ञात्' इस मंत्र के विवरण और तत्सम्बन्धित कुचोद्य का खण्डन पहले किया जा चुका है।

'स्तोमेन' इससे भी यज्ञ आदि की विवक्षा नहीं की गई हैं, किन्तु पूर्वमन्त्र में कथञ्चित् होमसम्बन्ध है। 'यं देवासो०, ( ऋ० सं० १०।८८।९ ) मंत्र का तथा 'स्तोमेन' मन्त्र का शुद्ध अर्थ ऊपर मूल संस्कृत में दिया गया है। 'अग्निः पूर्वेभिः' यहां पर भी भौतिक शक्तियों को 'ऋषि' नहीं कहा है, उसी प्रकार 'वायवा याहि:' का भी अर्थ अशुद्ध और निर्मूल है, क्यों कि योग की अपेक्षा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयमुपर्युक्तो निरुक्तसङ्केतोऽप्यशुद्ध एव ( १२।४१ ) इति सङ्केतस्य शुद्धत्वात्। तथा च देवदत्तस्य सिंहत्वमिव माणवकस्याग्नित्वमिव अग्नेः पशुत्वविरोधं परिलक्ष्य बीजपश्वादिपत्नेनैवाग्निना पशुना देवा अयजन्त इत्येवार्थस्तत्र दुर्गाचार्येण कृतः।

यदपि—'आपो ह यद्बृहती विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥ ७॥
यश्चिदापो महिना पर्यपश्यत् दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वपि देव एक आसीत् कस्मै देवाय हविषा विधेम॥ ८॥ ( ऋ० सं० १०।१२१ )

सर्गारम्भे यदा प्रकृतिविकारभूताभिः बृहतीभिः पञ्चतन्मात्राभिः गर्भं धारयन्तीभिः महदण्डरूपेण संहन्यमानाभिरग्निरुत्पादितः। पश्चात् देवानामसुर्गतिशील एकः महदण्डो जातः। याभिरद्भिः स्वमहिम्ना (दक्षम्) अग्निं धारयन्तीभिः यज्ञ उत्पादितः। यो देवेषु अधिदेवः ( महादेवः ) आसीत् तस्मै प्रजापतये वयं महदण्डस्यान्तर्वर्तमानाः प्राणरूपा देवगणाः हविः प्रदानरूपेण कर्मणा स्वसहयोगेन महदण्डकार्यं साधयामः। तथा—

'स्तोमेन हि दिवि देवासो अग्निमजीजनन् शक्तिभिः रोदप्रसितम्।
तमू अकृण्वन् त्रेधा भुवेकं स ओषधीः पचति विश्वरूपाः॥' ( ऋ० सं० १०।८८ )

भौतिका देवाः स्वसामर्थ्येन द्यावापृथिव्योर्व्यापकमग्निमुत्पादितवन्तः। तं त्रेधा व्यभजन्। स विविधा ओषधीः पचति।

जगन्निर्माणे संल्लग्नाः शक्तयः कथयन्ति वायवायाहि दर्शतेमे सोमा अरं कृताः। तेषां पाहि श्रुधि हवम्॥' ( ऋ० सं० १।२।१ )। हे दर्शनीय वायो आयाहि, इमे सोमा उत्पादकतत्त्वानि अलङ्कृतास्तान् पाहि स्वोदरसात्कुरु। अस्माकम् आकाङ्क्षाः श्रृणु पूरय च।

रूढि बलवान् होती हैं। 'धा' धातु से भी जो संग्रहण होगा, वह भी गौण अर्थ होगा। श्रवण, आकांक्षापूरण आदि भी—जड़ में संभव नहीं हैं। क्योंकि वह तो चेतन का धर्म है। अतः सूर्य को पशु समझना और उसका आलंभन करना भी गौण ही है। (वा० सं० २३।१७) मंत्र में सूर्य पशु के द्वारा याग का वर्णन करना भी तुच्छ है, क्योंकि 'अग्निः पशुरासीत्' आदि में 'आदित्यो यूपः' में यूपका आदित्यत्व जैसे गौण है वैसे ही अग्नि, वायु, सूर्य का पशुत्व गौण है क्योंकि प्रत्यक्ष विरुद्ध है। उसके पूर्व वाजसनेयी संहिता के २३।१६ की कण्डिका में विशस्यमान पशु बताया गया है। उसी अर्थ को दृढ़ करने के लिये आगे चलकर बताया है कि पशुभाव को प्राप्त हुए अग्नि ने इस पृथिवीलोक को जीता था। जिस लोक में अग्नि है, वह तुम्हारा लोक होगा, उस लोक को तुम जीतोगे तात्पर्य यह है कि जैसे पशुभाव को प्राप्त होकर अग्नि, वायु, सूर्य ने तत्तत् लोकों पर विजय प्राप्त किया और विशिष्ट ऐश्वर्य प्राप्त किया, उसी तरह हे पशो! तुम्हें भी उन लोगों की तथा ऐश्वर्य की प्राप्ति होगी।

'तं यज्ञं बर्हिषि०' यहाँ पर यज्ञसाधन में 'यज्ञ' शब्द का प्रयोग किया गया है। यहाँ पर मानस यज्ञ के अनुगुण ही साधन बताये गये हैं। 'वसन्तोऽस्यासीदाज्यम्' इस मन्त्र के द्वारा प्रतिपादित अर्थ का ही उपसंहार संक्षेप से 'यज्ञेन यज्ञः'—मन्त्र के द्वारा किया गया है।

यह जो कहा है कि 'महद् अण्ड के विभक्त होनेपर ग्रहोपग्रह जब उससे बाहर आये, तब ये सब एक दूसरे से दूर हुए। पृथिवी और आदित्य की समीपता का वर्णन मन्त्रों और ब्राह्मणों में बहुत मिलता है। कुछ काल के पश्चात् आदित्य, अग्नि और प्रबल वात के कारण झटके के साथ पृथिवी से दूर हुआ। स्व-स्थान से विचलित सूर्य दोले ( झूले ) के समान एक स्थान पर स्थिर नहीं हुआ। कई बार पृथिवी के समीप आया और दूर हुआ। वह न्यूनातिन्यून दो तीन बार पृथिवी से दूर होने के पश्चात् अपने स्थान पर स्थिर हुआ। आदित्य की इस सरण—दूर होने की क्रिया के कारण ही आदित्य का सूर्य नाम हुआ। ('सूर्यः सरतेर्वा' निरु० १२।१४)। वह भी ठीक नहीं है। तुम्हारी यह सब समझ भ्रमपूर्ण है। तुमने जिन वचनों का उल्लेख किया है, उनका अर्थ दूसरा ही है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वायुपशोः पुनरालभनम्—जगतः सर्गे स्थितिकाले च एतादृशा यज्ञाः सततं भवन्ति। सर्गोत्पत्त्यनन्तरं वायोः पुनरालमनं जातम्, पृथिव्याः सूर्यस्य च मध्ये विद्यमानो वायुस्तस्य कार्यभेदेन स्थानभेदेन च सप्तविभागा जाताः। एकैकस्य विभागस्य पुनः सप्तभेदा जाताः। एकोनपञ्चाशद्भेदेन मरुतां नामानि वैदिकवाङ्मये प्रसिद्धानि, (पृ० १३५-१३८) इति। तदेतत्सर्वं मूर्खजनप्रतारणमेव, प्रकृतिपरिणामादीनां यज्ञत्वेन लौकिकानां भोजनपानादिव्यापाराणामपि यज्ञपदव्यपदेश्यत्वापत्तेः। अग्निवायुसूर्यादिपशुत्वस्य प्रत्यक्षविरोधात्।

पशुत्वं तादृशालम्भनजनितयज्ञस्य काल्पनिकत्वमेव ज्ञानादिषु यज्ञत्वव्यपदेशवत्। न चापः पञ्चतन्मात्रा वा स्वातन्त्र्येण किञ्चित्कर्तुं समर्थाः जडत्वात्। परमेश्वरस्तु स्वशक्त्या ताः यथेष्टं परिणमयति न च जडानां दर्शनक्षमता सम्भवति। न च महदण्डान्तर्गता भूतगणा हविः प्रदाने समर्थाः, न वा प्रार्थनाक्षमा जडत्वादेव। परमेश्वरशक्त्यैव त्वयापि 'यश्चिदापो महिना पर्यपश्यत्, इत्युद्धृते ऋग्वेदसंहितामन्त्रे (१३६ पृष्ठे)। द्वितीयटिप्पण्यां 'पर्यपश्यत्' इत्यस्य चेतनवदुपचार एवाङ्गीकृतः। एतेनात्र यज्ञत्वमप्यौपचारिकमेव मन्तव्यम्। यथोपचारिकात्सिंहात् भिन्नो मुख्यः सिंहः भवति तथैव त्वत्कल्पितादौपचारिकात् यज्ञात् भिन्न एव मुख्यो यज्ञो वैदिकानाम्। तथात्वे केवलविधिस्तुत्यर्थमेव तत्र तत्र पशुत्वयज्ञत्वादिकल्पना ज्ञातव्या। मन्त्रार्थस्तु सायणाचार्योक्त एव समीचीनः। सूक्तस्यास्य प्रजापतिपुत्रः हिरण्यगर्भऋषिः कशब्दाभिधेयः प्रजापतिर्देवता त्रिष्टुप् छन्दः, बृहतीः बृहत्यः महत्यः आपः अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः, तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधाना धारयन्त्यः यत् यस्मात्कारणात् आपो ह आप एव विश्वमायन् सर्वं जगत् व्याप्नुवन् ततः तस्मात् देवानां देवादीनां सर्वेषां प्राणिनाम् असुः प्राणभूतः एकः प्रजापतिः समवर्तत। यद्वा यत् यं गर्भं दधाना आपो विश्वात्मनात्रस्थिताः ततो गर्भभूतात् प्रजापतेः देवादीनां प्राणात्मा वायुरजायत। अथवा यत् इत्यस्य लिङ्गवचनयोर्व्यत्ययेन उक्तलक्षणा या आपः विश्वमावृत्य स्थिताः, तंतस्ताभ्योऽद्भ्यः सकाशात् एकोऽद्वितीयः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम तस्मै कस्मै वयमृत्विजः परिचरेम परिचरणकर्मविधातुमुद्युक्ता भवेम।

अत्र 'आपः' इति पदेन परमेश्वराधिष्ठिताः कर्मसमवेता महदाद्याः सप्तप्रकृतिविकृतय उच्यन्ते। द्वितीयमन्त्रस्याप्ययमर्थः—यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः दक्षं प्रजापत्यात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयन्तीः अपः व्यत्ययेन प्रथमा आपः प्रलयकालीनाः महिना महिम्ना स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः

टिप्पणी में जो तुमने 'जामी सयोनी' मन्त्र से पृथिवी और सूर्य की समीपता का वर्णन किया है, वह भी ठीक नहीं है। यह सम्पूर्ण मंत्र (ऋ० सं १।१५९।४) ऋक् संहिता में है, उसे और उसके अर्थ को अच्छी तरह समझो। उस मन्त्र में कहीं भी सूर्य-पृथ्वी के समीपागमन को नहीं बताया है। किन्तु वहाँ द्यावा-पृथ्वी का वर्णन किया गया है। 'द्यौ' का अर्थ सूर्य नहीं है। पृथिवी की तरह 'दिव्' भी लोक है। एक ही आकाश में दोनों के अवस्थान को ही सहावस्थान कहा गया है।

जो तुमने तैत्तिरीय संहिता और ब्राह्मण का वचन देकर सूर्य और पृथिवी के सहावस्थान को बताया है, वह भी तुम्हारे अज्ञान का ही विजृम्भण है। वहां भी द्युलोक और पृथिवीलोक की ही चर्चा की गई है, सूर्य और पृथिवी की तो वहाँ चर्चा ही नहीं है। द्युलोक और पृथिवीलोक की चर्चा भी उपासम्भरण विधि के अर्थवाद रूप में ही की गई है। आपके उद्धृत किये हुए मन्त्र-ब्राह्मण के वचनों से आपका अभिप्रेत अर्थ किसी तरह भी नहीं निकल पा रहा है।

पृ० १३८ पर टिप्पणी में उद्धृत तैत्तिरीयसंहिता के वचन से भी सूर्यगोलक का गमनागमनादि सिद्ध नहीं हो रहे हैं। उक्त तैत्तिरीय संहिता वचन का अर्थ मूल संस्कृत में दिया गया है। तैत्तिरीयसंहिता में वहीं पर होम विशेष के अर्थवाद रूप में 'आदित्य' पद को प्राप्त करके भी उन आदित्यों ने वहाँ की समृद्धि को अपर्याप्त मानकर पुनः भूमि पर यजमान रूप से आकर अग्नि का आधान कर इन प्रशस्त होमों को करके समृद्धि को प्राप्त किया। यह भाव उस वचन में बताया गया है। आदित्य गोलक का ही पृथिवी पर आगमन

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पर्यपश्यत् परितो दृष्टवान्, यश्च देवेष्वधिदेवः देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीय आसीत् भवति तस्मै कस्मै हविषा विधेम। प्रकृतः प्रजापतिरीश्वरश्चेतनो न जडः। अत एव चेतनावद् व्यवहारोऽपि नौपचारिकः। नात्र यज्ञः प्राधान्येन व्यपदिष्टः, यज्ञादिविकारजातस्योपलक्षकत्वात्। 'तस्माद्यज्ञा'दितिमन्त्रस्य विवरणमेवं तत्सम्बन्धि कुचोद्यं तु पूर्वमेव खण्डितम्।

'स्तोमेने' त्यनेनापि न यज्ञादिकं विवक्षितम्, किन्तु पूर्वस्मिन्मन्त्रे कथञ्चित् होमसम्बन्धोऽस्ति 'यं देवासोऽजनयन्तत्राग्निं यस्मिन्नाजुहुवुर्भुवनानि विश्वा। सोऽर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा॥' (ऋ० सं० १०।८८।९) यं वैश्वानरमग्निं देवासः देवाः अजनयन्त उत्पादितवन्तः। यस्मिन्नुत्पन्ने वैश्वानरेऽग्नौ विश्वाभुवनानि आजुहुवुः, सर्वमेधे स वैश्वानरोऽग्निः अर्चिषा तेजसा पृथिवीमन्तरिक्षं आपः पृथिवी इत्यन्तरिक्षनामसु। इमां भूमिञ्च ऋजूयमानः ऋजुगमनः महित्वा महत्त्वेन अतपत् सर्वं तपति। 'स्तोमेने'ति मन्त्रस्य त्वयमर्थः देवासः शक्तिभिः कर्मभिः रोदसिप्राम् द्यावापृथिव्योः पूरयितारम् अग्निं सूर्यात्मकं दिवि द्युलोके स्तोमेन स्तुत्या हि अजीजनत् उत्पादितवन्तः, अपि च तमु तमेव कं सुखकरमग्निं यज्ञे त्रेधाभुवे त्रेधाभावाय अकुर्वन् कृण्वन्ति स पृथिव्यां वर्तमानः विश्वरूपाः सर्वरूपाः ओषधीः व्रीह्याद्यास्तेन तेनोपकारेण पचति। 'स्तोमेन यं हि दिवि देवासोऽग्निमजनयन् शक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः, यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम्' (नि० ७।२८) 'अग्निः पूर्वेभिरित्यत्रापि न भौतिकशक्तीनामृषित्वं तत्र दर्शनासम्भवेनेषित्वायोगात्। 'वायवाया हो' त्यत्रापि न केवलस्य जडस्य वायोः सम्बोध्यत्वम् सोमपदेनापि तत्तदुत्पादकतत्त्वानां ग्रहणमपि निर्मूलमेव रूढेर्योगाद् बलीयस्त्वात्। यातेरपि तेषां सङ्ग्रहणं गौणमेवार्थः। श्रवणमाकाङ्क्षापूरणादिकमपि जडेन सम्भवति, तस्य चेतनधर्मत्वात्। तेन सूर्यस्यापि पशुत्वं तदा लम्भनादिकमपि गौणमेव। (वा० सं० २३।१७) मन्त्रे सूर्यपशुना यजनस्य वर्णनमित्युक्तम्, यदपि यत्किञ्चित्। 'अग्नः पशुरासीत्तेनायजन्त, स एवं लोकमजयन्नग्निः स ते लोको भविष्यति, ते जेष्यति, वायुः पशुरासीत् इत्यादिषु 'आदित्यो यूप, इति यथा यूपस्य गौणमेवादित्यत्वं तथैवाग्निवायुसूर्यादीनामपि गौणमेव पशुत्वं प्रत्यक्षविरोधात्। ततः पूर्वं न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः। यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु (वा० सं० २३।१६)। इति कण्डिकायां विशस्यमानः पशुरुक्तः—हे अश्व अस्माभिः यत्त्वं संज्ञप्यसे एतत् त्वं न म्रियसे मरणं न प्राप्नोषि। न च रिष्यसि न विनश्यसि विशस्यमानः। यत् यस्मात् सुगेभिः सुगमनैर्मार्गैः देवान् प्रति एषि गच्छसि। किञ्च सुकृतः साधुकारिणः नरा यत्र लोके आसते तिष्ठन्ति यत्र च ते सुकृतो ययुर्गताः तत्र लोके सविता देवः त्वां दधातु स्थापयतु। 'सविता वैन स्वर्गे लोके दधाति' (श० १३।२।७।१२) इति श्रुतेः। तस्यैवार्थस्य दृढीकरणायोत्तरत्र अथ यदि योऽयमद्य प्रसिद्धोऽग्निर्देवः सोऽपि पूर्वं पशुरासीत्। तेनाग्निरूपेण पशुना पूर्वं देवा अयजन्त। स पशुभावमुपगतोऽग्निः एतं पृथिवीलोकमजयत् यस्मिल्लोके अग्निः स ते लोको भविष्यति। तं लोकं त्वं जेष्यसि। एताः प्रोक्षणीरपः पिब। तथा च श्रुतिः—'यावानग्नेर्विजयो यावांल्लोको यावदैश्वर्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्यं भविष्यतीत्येवेनं तदाह यथैव वायुः सूर्यश्च पशुरासीत् वायुलोकोऽन्तरिक्षं सूर्यलोकः स्वर्गः तावपि ते भविष्यतः। यद्वा सर्गकाले यदा पशवो

नहीं। क्योंकि अग्न्याधान, होम आदि का कर्तृत्व उसमें उपपन्न नहीं हो सकता। रात्रि में अग्नि का प्रकाश अधिक रहने से रात्रि को आग्नेयी कहा गया है। पशुओं का स्वामी अग्नि होने से पशुओं को भी आग्नेय कहा गया है। अर्थवाद श्रुति का विधि की प्रशंसा में तात्पर्य हुआ करता है।

और यह जो कहा है कि—शतपथब्राह्मण (१।४।१।२२) की श्रुति में पृथिव्यादि लोकों के साथ सूर्य का सहावस्थान

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नासन् तदा सृष्टिदेवा मानसे यज्ञे अग्निं वायुं सूर्यं च पशुत्वेन परिचिन्त्य तैरेव मानसं यज्ञं कृतवन्तः। तत एव तेषां पशुभूतानां तत्तल्लोकविजयः विशिष्टैश्वर्यप्राप्तिश्च यथा तथैव तवापि तेषांल्लोकानामैश्वर्याणाञ्च प्राप्तिर्भविष्यतीति।

'तं यज्ञं बर्हिषि प्रौक्षन् पुरुषञ्जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥' (वा० सं० ३१।९)

अत्र यज्ञसाधने यज्ञशब्दः। यज्ञं यज्ञसाधनं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणादिसंस्कारैः संस्कृतवन्तः। कीदृशं पुरुषं अग्रतः सृष्टेः पूर्वं जातं पुरुषत्वेनोत्पन्नं 'ततो विराडजायत विराजो अधिपूरुषः इत्युक्तत्वात्। तेन पुरुषेण पशुना देवा अयजन्त मानसं यज्ञं कृतवन्तः। के ते ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयो ये च तदनुगुणा ऋषयो मन्त्रद्रष्टारस्ते सर्वे अयजन्त। तत्र मानसयज्ञानुगुणान्येव साधनान्युक्तानि। 'वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः। सप्तास्यासन् परिधयस्त्रिःसप्तसमिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥' (वा०सं० ३१।१५) एतस्यैवार्थस्य संक्षेपेण 'यज्ञेन यज्ञमयजन्त' (वा० सं० ३१।१६) इत्युपसंहारः कृतः। यच्च 'सूर्यस्य महद्दण्डाद्विभागानन्तरं ग्रहोपग्रहास्ततो बहिरागताः। तदा सर्वे चैते लोका एकैकस्माद्दूरं याताः पृथिव्यादित्ययोः सामीप्यस्य वर्णनं मन्त्रेषु ब्राह्मणेषु च दृश्यते। किञ्चित्कालानन्तरं आदित्योऽग्नेर्वातस्य च प्राबल्यात् पृथिव्याः सकाशात् दूरं गतः स्वस्थानाद्विचलितः सूर्यः दोलावन्नैकत्रस्थित आसीत्। अनेकधा सूर्यः पृथिव्याः समीपमागतः पुनश्च दूरं गतः। न्यूनान्यूनं द्वित्रवारानन्तरं सूर्यः पृथिव्या दूरमपसृत्य स्थिरः सञ्जातः। ततः सरणात् दूरगमनक्रियायोगात् आदित्यस्य सूर्यं इति नामकरणं जातम्। 'सूर्यः सरतेर्वा' (नि० १२।१४) इति यास्कोक्तेः।' (पृ० १३८) इति, तदपि यत्किञ्चित्, आभाससमानयोगक्षेमत्वात् त्वदुद्धृतवचनानामन्यार्थत्वात्।

यच्च टिप्पण्याम् 'जामी सयोनी मिथुना समोकसा' इति मन्त्रेण सूर्यपृथिव्योः समीपागमनं साधितम्, तदपि यत्किञ्चित्, तथाहि सम्पूर्णोऽयं मन्त्रः, 'ते मायिनो ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा। नव्यं नव्यं तन्तुमातन्वते दिवि समुद्रे अन्तः कवयः सुदीतयः।' (ऋ० सं० १।१५९।४) इति। एतदर्थंस्तु ते प्रसिद्धे द्यावापृथिव्यौ मायिनः मायाप्रज्ञा तद्वन्तः स्वविषयप्रज्ञावन्तः प्रज्ञोपलक्षितकर्मवन्तो वा सुप्रचेतसः सुप्रकर्षेण चेतितुं शक्ताः रश्मयः ममिरे मिमते

रहता है, वह भी ठीक नहीं है। क्योंकि अन्यार्थवाले वचनों को देखकर निर्मूल इतिहास की कल्पना करना उचित नहीं है। उद्धृत किये हुए निरुक्तवचन (नि० १२।१४) से तो प्रतिदिन सूर्य का सरण ही बताया गया है, क्योंकि मन्त्रवर्ण से भी यहीं ज्ञात होता है।

पृ० १३८—३९ पर जो कहा—जब सूर्य स्वस्थान में टिक गया, उसके पश्चात् सूर्य के जाज्वल्यमान भाग पर जैसे पिघले हुए लोहे पर कुछ क्षण पश्चात् मैल जम जाता है, वैसे ही मैल जम गया। उससे सूर्य का प्रकाश अवरुद्ध हो गया वह पृथिवी का स्वरूप था, 'वशा अवि' रूप। (सम्पूर्ण उद्धरण मूल संस्कृत में दिया गया है।) वह कथन भी भ्रम से पूर्ण है। क्योंकि उनके अपने सिद्धान्त से ही विरोध हो रहा है। उस विरोध को मूल संस्कृत में बताया गया है। समाजी लोग देवताओं को चेतना और ऐश्वर्ययुक्त और उसी प्रकार असुरों को तो मानते नहीं। किन्तु उनके मत में पृथिवी आदि प्राकृत पदार्थ ही देव है और वे ही असुर हैं। केवल मिथ्या इतिहास लिखने में निपुण युधिष्ठिर ने यहाँ पर युक्त्याभास और वचनाभासों को उपस्थित कर कुछ तो भी प्रलापमात्र किया है। यज्ञ परक ब्राह्मणों को वेद न कहने में तथा उनकी निरपेक्ष प्रमाणता के स्वीकार न करने में और उनके विषय का अपलाप करते हुए अर्थ का अनर्थ करने में उसे किञ्चित् लज्जा का भी अनुभव नहीं हो रहा है। किञ्च-देवताओं ने किन उपायों से चार चरणों में तम को दूर किया ? और उससे उनका कौन सा प्रयोजन सिद्ध हुआ ? किसलिये यह सब वर्णन किया गया है ? इत्यादि के सम्बन्ध में कुछ भी नहीं लिखा। किन्तु अर्धजरतीय न्याय से अपनी स्वेच्छा के अनुसार ही किसी एक का तात्त्विक वर्णन तो किसी का आलंकारिक वर्णन अलग कर अपने विचारों को व्यक्त करने की केवल धृष्टता की है।

सिद्धान्त में तो (तैत्तिरीय संहिता के २।२।१) स्थल पर 'वायव्यं……ग्रामकामः'। आदि वचनों से विविध यज्ञों को बताया गया है। सायणाचार्य ने उसे स्पष्ट किया है। तथापि युधिष्ठिर ने विधि और अर्थवादों के अभिप्राय को न जानकर सैद्धान्तिक अर्थ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रमाणेन परिच्छिन्दन्ति। कीदृश्यौ द्यावापृथिव्यौ जामी परस्परं भगिनी भगिन्यौ, एतत् कुतः सयोनी समानोत्पत्तिस्थाने एकस्यैवाण्डस्य द्विधा विभागेन जनितत्वात्। मिथुना मिथुनभूते परस्परमवियुक्ते इत्यर्थः। सनोकसा समानस्थाने द्यावापृथिव्योरुभयोरपि एकस्मिन्नवकाशरूपेऽवस्थानात्। समीचीनस्थाने वा कीदृशा मायिनः कवयः मेधाविनः स्वव्यापारविषयज्ञानवन्तः सुदीतयः सुष्ठुद्योतनाः रश्मयः समुद्रेऽन्तरिक्षे अन्तर्मध्ये समुद्रशब्दस्य अन्तरिक्षनामसु पाठात्। नव्यं नव्यं तन्तुं तनीयं विस्तारणीयम् जातावेकवचनम्। रश्मीनातन्वते सर्वत्र विस्तारयन्ति इति। नात्र मन्त्रे सूर्यपृथिव्योः समीपागमनमुक्तम्, किन्तु द्यावापृथिव्योरत्र वर्णनम्। नहि द्यौरेव सूर्यः, पृथिव्या इव दिवोऽपि लोकत्वात्। उभयोश्चैकस्मिन्नाकाशेऽवस्थानमेव सहावस्थानम्।

यदपि द्यावापृथिवी सहास्ताम्' (तै० सं० ५।२।३) (तै० ब्रा० १।१।३।२) (दृ० १३८) इत्यनेन सूर्यपृथिव्योः सहावस्थानमुक्तम्' इति, तदप्यज्ञानविजृम्भितम्, तत्रापि द्युलोकपृथिवीलोकयोश्चर्चितत्वात्। न सूर्यपृथिव्योस्तत्र चर्चा। द्युलोकपृथिवीलोकयोश्चर्चापि ऊषासम्भरणस्यार्थवाद एव। तथाहि—'ऊषान् निवपति। पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननमग्निं चिनुतेऽथो संज्ञानं यवसंज्ञानं ह्येतत् पशूनां यदूषा। द्यावापृथिवी सहास्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति। यदमुष्या यज्ञियमासीत् तदस्यामधात्। त ऊषा अभवन्। यदस्यायज्ञियमासीत्तदमुष्यामधात् ततश्चन्द्रमसि कृष्णम् ऊषान् निवपन्नदोध्यायेत् द्यावापृथिव्योरेव यज्ञिये अग्निमाधत्तेरन्धाग्नेरेवैतेन 'प्रियं धामावरुन्धे' (तै० ब्रा० १।१।३।) अत्र सायणः—'पशवो' ह्यषरक्षेत्रोत्पन्नं तृणादिकं रसान्तरयुक्तत्वादादरेण भक्षयित्वा पुष्टाः सन्तोऽपत्यान्युत्पादयन्ति। तस्मादूषा लवणाम्भसा मिश्रिताभिश्चिता भूम्यवयवा इति यावत्। सैषा पुष्टिः प्रजननम्। तद्रूपोषानिवापेन तदुभयप्राप्तिः। अपिच संज्ञानप्रदेश एवाग्निराहित्ये भवति। एतच्चोषरं क्षेत्रं पशूनां संज्ञानम्। पशवो ह्याघ्राणेन तत्संस्थानं जानन्ति। तस्मादूषा आधानस्थाने वपनीयाः।

सृष्टिकाले द्यावापृथिव्यौ मध्यगते अन्तरिक्षव्यवधानरहिते अभूताम्। तदा प्राणिनामवकाशार्थमीश्वरानुज्ञया परस्परं वियोगं गते वियोगकाले स्नेहातिशयात् परस्परमेवमब्रूताम्, आवयोर्यज्ञयोग्यं यत्सारमस्ति तत्सहैव तिष्ठतु। भूसारस्य दिवो वियोगो मा भूत् द्युसारस्य च भूमेर्वियोगो मा भूदिति। ततोऽमुष्याः दिवः सम्बन्धि यत् यज्ञियं सारं तदस्यां पृथिव्यां साधीरस्थापयत्। ते च द्युलोकसारा एते दृश्यमाना भूम्यवयवा ऊषरूपा अभवन्। तस्याः पृथिव्या यत् यज्ञियं सारमासीत् तत् अमुष्यां दिवि भूमिरास्थापयत्। तच्च स्थापितं भूसारमदो दृश्यमानं चन्द्रमसि कलङ्करूपं कृष्णं तस्मात् भूसारत्वात् ऊषाणां निवपनकाले तत् कृष्णरूपमत्र तिष्ठतीति ध्यायेत्। तथा सति द्युलोकसम्बन्धिन्यूषे भूलोकसम्बन्धिनि कृष्णे चाग्निराहितो भवति। 'सह हैवेमावग्रे लोका आसतुः' (श० ७।१।२।२३) इत्यनेनापि न सूर्यस्य पृथिव्याः समीपगमनादिकमुक्तम्, किन्तु भूस्वर्गलोकयोरेकभावस्थायित्वमुक्तम्। पौर्वापर्यालोचनयात्रायं भावः—गार्हपत्याग्नीध्रीयाहवनायानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्मकत्वात् क्रमेणैव तेषां संस्कारो युक्त इत्याशङ्क्य तेषां व्युत्क्रमानुष्ठानं समर्थ्यते—सह हैवेमाविति।

पर धूलिप्रक्षेप करके नितान्त मिथ्या काल्पनिक इतिहास गठन में प्रयत्न किया है। क्या ऐसे ही पाण्डित्य के बल पर सायणाचार्य को इतिहासानभिज्ञ कहने की धृष्टता कर रहे हो?

मीमांसासूत्रकार जैमिनि के अनुसार तो अर्थवाद वाक्यों की विधिवाक्यों के साथ एकवाक्यता रहने से उनका उपयोग विध्यर्थ के स्तावक के रूप में किया जाता है किन्तु युधिष्ठिर तो मीमांसासिद्धान्त के विपरीत ही बात करते हैं—कि अर्थवादों के द्वारा इतिहास का प्रतिपादन किया जाता है। और विधिवाक्यों में आलङ्कारिकता की कल्पना करते हैं। अहो! कैसी यह इनकी नवीन मीमांसा है। इनकी मीमांसा में तो 'ऋषियों' को ही काल्पनिक बताया गया है। किन्तु जैमिनि की मीमांसा में 'ऋषि' काल्पनिक नहीं है।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इमौ भूस्वर्गाख्यौ लोकौ अग्रे प्राक्अण्डकटाहभेदात्प्राक् सहासतुः। तयोः वियतोर्विविधं गच्छतोर्वियुज्यमानयोर्मध्येऽवकाश आसीत्। तदन्तरिक्षमभवत्। ततः पूर्वं द्यावापृथिव्योर्विगमनात्पूर्वम्। ईक्षमित्याकाशस्य नाम। द्यावापृथिव्योर्विश्लेषे सति तयोर्मध्ये खलु इदमीक्षमभूत्तदेवान्तरिक्षम्। एवं लोकद्वयानन्तरभावित्वात् गार्हपत्यचयनानन्तरं अन्तरिक्षसंस्तुतान् धिष्ण्यरूपान् आग्नीध्रीयानतिक्रम्य आहवनीयं चिनोति चयनेन संस्करोति। यस्मात्तौ भूस्वर्गलोकौ अग्रे खलु असृज्येताम् तस्मादाहवनीयचयनानन्तरम् प्रति निवृत्य सदसि धिष्ण्यान् निवपति निर्मिमीते। तस्मात् गार्हपत्यचयनानन्तरम् आहवनीयस्यैव चयनम्।

यदपि च—'आदित्या वा अस्माल्लोकादमुं लोकमायन्, तेऽमुष्मिंल्लोके व्यतृष्यन्त, इमं लोकं पुनरेत्य ......सुवर्गलोकमायन्' ( तै० सं० १।५।४ ), 'आदित्यो वा 'अस्माल्लोकादमुं लोकमैत्, सोऽमुं लोकं गत्वा पुनरिमं लोकमध्यायत् .......सोऽग्निमस्तौत्। स एनं स्तुतः सुवर्गं लोकमगमयत्' ( तै० सं० १।५।९ ) ( पृ० १३८ ) इति टिप्पण्यामुद्धृतम्, तेनापि सूर्यगोलकस्य न गमनागमनादिकं सिद्ध्यति। किन्तु तस्य वचनस्यायमर्थः—आदित्याः आदित्याधिष्ठातृदेवताः आदित्यपदप्राप्तेः पूर्वं यजमानावस्थायाम् आधानपुनराधाने अनुष्ठाय सुवर्गं गत्वा तत्र व्यतृष्यन्, विशेषेण तृषां प्राप्ताः। समृद्धिर्न पर्याप्तेति मत्वा पुनर्भूमिमागत्य अग्निमाधाय एतान् होमानजुहवुस्त आर्ध्नुवन् ते सुवर्गलोकमायन्। यः पराचीनं पुनराधेयादग्निमादधीत स एतान् होमान् जुहुयात् यामेवादित्या ऋद्धिमार्ध्नुवन् तामेवर्ध्नोति, इति, तत्रैव होमविशेषार्थवादरूपेण आदित्यपदं प्राप्याप्यादित्यास्तत्रत्यां समृद्धिमपर्याप्तां मत्वा पुनर्भूमौ यजमानरूपेणागत्याग्निमाधाय प्रशस्तानेतान् होमान् कृत्वा समृद्धिं प्राप्तवन्त इति। नात्र आदित्यगोलस्यैव पृथिव्यामागमनमुक्तम्, तस्याग्न्याधानहोमादिकर्तृत्वानुपपत्तेः। तथैव आदित्यो वा अस्माल्लोकात् अमुं लोकमैदित्यस्याप्ययमर्थः, यत् असुरा देवानां पूर्वलब्धं लब्धुं योग्यं च पशुरूपधनमपहृत्य तेन सह रात्रीं प्राविशन् अन्धकारे क्वापि गताः। ततः पशुहीना वयं खिद्यन्तो देवा उपायमपश्यन्। रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी। अग्नेः पशुस्वामित्वात् पशवोऽप्याग्नेयाः।

'देवा अग्निमस्तुवन्। स्तुतः सोऽग्निरेभ्यो देवार्थं रात्रेराहृत्य तान् पशून् निराजन् निरगमयत्।' इति। तथैवादित्यो देवः पुण्यप्रभावादस्माल्लोकादमुं स्वर्गं लोकं प्राप्तवान्। अमुं लोकं गत्वा पुनरियं लोकं फलभोगानन्तरमागतः। आगत्य चात्र मृत्योरबिभेत्। मृत्युसंयुत इव। यं लोकः सोऽमन्यत। इममेवाग्निं स्तवानि। स मास्तुतः सुवर्गं लोकं गमयिष्यतीति। सोऽग्निमस्तौत्। स एनं स्तुतः सुवर्गं लोकमगमयत्।' इति तत्रैव फलमप्युक्तम्—'य एवं विद्वानग्निमुपतिष्ठते सुवर्गं लोकमेति सर्वमायुरेत्यभिव एषोऽग्नी आरोहति' इत्येवमर्थवादश्रुतेः विधिप्रशंसायां तात्पर्यात्। यदपि च शतपथब्राह्मणे ( १।४।१।२२ ) श्रुतौ सूर्यस्य पृथिव्यादिलोकैः सहावस्थानमुक्तम्, तदपि न किञ्चित्, 'अग्न आयाहि वीतय' इति मन्त्रे समन्तिकमिव ह वा इमेऽग्रे लोका आसुरित्युन्मृश्या हैवं घोरास।' (श० १।४।१।२२, इत्युक्तम्। तत्र वीतय इति पदं व्याख्यातुमितिहासमाह—समन्तिक इति। समन्तिकमिव सन्निकृष्टतरमिवेमे लोका आसुः। अभिनयेन सन्निकर्षमेव दर्शयति—

यह जो कहा कि—'अविशब्द से मेष के तुल्य अकठिन आर्द्रभूमि बताई गई है'—वह भी अशुद्ध है। क्योंकि 'न विधौ परः शब्दार्थः' इस नियम के अनुसार विधि में गौण अर्थ नहीं लिया जाता।

'यत्वासूर्यस्वर्भानुस्तमसा०' (तै० सं० २।१।२।५) और 'स्वर्भानोरधः'—(तै० सं० २।१।२।६) तथा 'मामियं तवसन्तमत्र०—(तै० सं० २।१।२।७) और 'प्राणोत्रह्मा युयुजात'—( ५।४०।८ ) इन सबके वास्तविक अर्थ मूल संस्कृत में दिये गये हैं। सभी आख्यायिकाएँ अर्थवादरूप हैं, उनका स्वार्थ में तात्पर्य नहीं रहता, किन्तु उनका तात्पर्य विध्यर्थ की स्तुति में ही रहता है।

विधि में गौण अर्थ की संभावना न रहने से 'अनिमेष' आदि शब्दों के अन्यार्थ की कल्पना करना भी असंगत ही है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्युन्मृश्येति। यथोर्ध्वबाहुना शाखाग्रं स्पृश्यते एवं द्यौरपि हस्तस्पृश्येव बभूवेत्यर्थः। देवा अकामयन् कथमु इमे लोका विप्रकृष्टा भवेयुः। ते च वीतये विश्लिष्टा इति वीतिः तस्यै वीतये, अर्थात् 'वीतये' इत्येतदक्षरत्रयप्रयोगात् इमे लोकाः परस्परं विदूरं विप्रकर्षं गताः। तत्र यथा बीजावस्थापन्नस्य वटस्य मूलं शाखाः शाखाग्रञ्च सन्निकृष्टतरमिव भवति, कार्यावस्थां प्राप्य विप्रकृष्टा एव भवन्ति। तथैवाण्डावस्थायां सर्वे लोकाः सन्निकृष्टा एव भवन्ति। ते चाण्डपरिपाके भेदनावस्थायां विप्रकृष्टा एव भवन्ति। तस्मान्नैतादृशैरन्यपरैर्वचनैर्निमूलेतिहासकल्पनं युक्तम्। 'सरतेर्वा सूर्यः (नि० १२।१४) इति निरुक्तवचनेन तु प्रतिदिनं सरणमेव सूर्यस्य विज्ञायते, 'देवो याति भुवनानि पश्यन्' (वा० सं० ३४।३१) इति मन्त्रवर्णात्।

यदपि च 'सूर्यस्थैर्यानन्तरं तस्य जाज्वल्यमानभागोपरि द्रवीभूतलौहस्योपरि मालिन्यमिव कियत्कालानन्तरं मालिन्यं जातम्, तेन प्रकाशोऽवरुद्धः। तदेव तैत्तिरीयसंहितायाम् असुरस्वर्भानुद्वारकं सूर्यस्य तमसा वेधनमुक्तम् 'स्वर्भानुरासुरः सूर्यं तमसा विध्यत्' (तै० सं० २।१।२।) इति। सूर्यस्यायं दोषो दैवीभिः शक्तिभिः चतुर्भिः पादैरपसारितः। 'तस्मै देवाः प्रायश्चित्तिमैच्छन्। तस्य यत् प्रथम् तमोऽपाघ्नन् सा कृष्णाविरभवत्, यद् द्वितीयं सा फल्गुनी, यत् तृतीयं सावलक्षी, यदध्यस्थात् अपाकृन्तन् सा विर्वशा समभवत् (तै० सं० २।१।२।) अर्थात् देवाः स्वर्भानुनाऽसुरेण सूर्यस्योपर्युत्पादितस्य तमोजन्मावरणरूपदोषस्य प्रायश्चित्तिं (निवृत्तिम्) ऐच्छन्। तत्र प्रथमवारं तदपवारणे कृष्णवर्णाविर्जाता, द्वितीयवारं तदपवारणे फल्गुनी (रक्तवर्णा) अविर्जाता, तृतीयवारं श्वेतवर्णा अविर्जाता, चतुर्थे पर्याये तदपवारणे वशा उसी प्रकार 'साविर्वशा भवत्'—(तै० सं० २।१।२) और 'अथवा इयं तर्ह्यासीद्०' (मै०सं० २।५।२) इनकी भी पूर्ववत् ही व्याख्या होगी।

पृ० १४४ पर अथर्ववेद (१।१६।४) तथा यजु के कतिपय मन्त्रों को उद्धृत कर समस्त पशुओं की अहिंसा को बताने का जो प्रयास किया है, वह भी व्यर्थ है। क्योंकि उद्धृत मन्त्रों के अभिप्राय को नहीं समझ पाये हो और हमने समाधान भी पहले कर दिया है। हरिण्यशरीर की प्राप्ति में हेतु होने से वेद विहित हिंसा को 'अहिंसा' ही कहा गया है। किंच अपना स्वार्थसाधन करने के लिये जैसे कात्यायन-महीधर आदि वचनों को उपस्थित कर पशुओं के उत्सर्ग को सिद्ध करते हो, उसी तरह उन्हीं के वचनों से माध्यस्थ्य का अवलंब कर प्रकृत में भी क्यों नहीं दृष्टिपात कर रहे हो? 'अश्वरीर ईशाने उपदधाति', 'नैर्ऋत्येऽजमुपदधाति' आदि वचनों की क्या गति होगी? किंच तुमने और दयानन्द ने भी निरुक्त को परम प्रमाण माना है। यास्काचार्य तो 'आम्नायवचनात् अहिंसैव प्रतीयेत' (नि० १।१६) कह रहे हैं। और दुर्गाचार्य ने उसकी व्याख्या भी की है, जो मूल संस्कृत में दी गई है। वेद ने यज्ञीयवध को 'अवध' ही बताया है। जैसे व्रीहि आदि का पुरोडाश प्रकृतित्वेन याग में उपयोग होता है, उसी तरह पशुओं का वपाधिप्रकृतित्वेन उपयोग होता है। अत एव कोषकार ने 'आलम्भन' शब्दका मरण के पर्यायशब्दों में उल्लेख किया है। कोषादि अनेक प्रमाणों से प्रसंगानुसार 'आलम्भ' शब्द का वध अथवा स्पर्श अर्थ ग्रहण किया जाता है। अत एव चरकवाक्य में वधार्थक स्पर्शशब्द को तुमने भी माना है अतः जैसे निषेधवशात् हिंसा में अधर्मत्व प्रतीत होता है, वैसे ही विधिवलात् हिंसा में धर्मत्व का भी संभव हो सकता है। जैसे बिना विवाह के स्त्री-स्पर्श पाप का कारण समझा जाता है किन्तु शास्त्र-सम्मत विवाहपूर्वक स्पर्श, धर्म समझा जाता है, वैसे ही प्रकृत प्रसंग में भी समझना चाहिये। शङ्कर-रामानुजादि जैसे वीतराग आचार्य-रत्नों ने भी वैदिकसंज्ञपन (आलंभन, वध) को धर्म ही बताया है। 'ब्रह्मणे ब्राह्मणमालभते' 'क्षत्राय राजन्यम्' इत्यादि स्थलों में तो 'कपिञ्जलादिवत् उत्सृजन्ति ब्राह्मणादीन्'—(का० श्रौ० सू० २१।१।१२) सूत्र से उनका उत्सर्ग विहित ही है। धर्म-अधर्म का निर्णय करने में शास्त्र को ही प्रमाण माना जाता है। शास्त्रने जहाँ उत्सर्ग का विधान किया हो, वहाँ उसी को धर्म, और जहाँ संज्ञपन कहा है वहाँ उसी को धर्म कहा जाता है। संन्यास में सर्वविध यज्ञादि कर्मों का त्यागकर ब्रह्मानुसन्धानपरायणता को ही मुख्यधर्म कहा गया है। उसका अधिकार जब तक प्राप्त नहीं है तब तक तो कर्मकर्तव्य ही रहते हैं। सङ्ग्राम, हिंसा से पूर्ण रहने के कारण उसमें क्रूरता सर्वविदित ही है। तथापि उसके न करने पर भगवान् स्वयं संग्राम न करनेवाले के लिये प्रत्यवाय बताते हैं। 'अधेन्वा चरति माययैषवाचं शुश्रुवाँ अफलामपुष्पाम्॥'—(ऋ० सं० १०।७१।५) यहाँ पर फलरहित-पुष्परहित वाणी को 'मायाधेनु' शब्द से कहा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अविजतेति। अर्थात् प्रकृते स्वर्भानुद्वारा सूर्यस्योपरि तमस आरोपस्य आरोपापाकरणस्य अपाकरणाच्च कृष्णवर्णाया लोहिन्या श्वेताया वशार्धमिण्या अवेरुत्पत्तेरुल्लेखः। तत्र पुनः पुनः आवरणतदपाकरणयोः सत्यत्वेऽपि अवीनां वर्णनमालङ्कारिकम्। अद्यापि सूर्ये कृष्णवर्णस्थासकस्य विद्यमानत्वात्। साम्प्रतमपि कृष्णवर्णस्थासकाः प्राकृतिकघटनाचक्रानुसारेण नियतसमये यदा दूरीभवन्ति तदानीं सूर्ये अत्यधिकोच्चानां ज्वालानां प्रादुर्भावेन रेडियोक्रमो नश्यतीति वैज्ञानिकानां दृष्टिः।

चतुःकृत्वः क्रमशः सूर्यावरणापक्रमेण पृथिव्या यादृशी स्थितिर्दृश्यासीत् तस्या एव आलङ्कारिकभाषया अविरूपेण वर्णनम्। नाविशब्दः पृथिवीमात्र वाचकः किन्तु आर्द्रावस्थापन्ना अवितुल्या अकठिना या पृथिवी तामेव बोधयति। एतच्च अविमेघप्रसङ्गे स्पष्टयिष्यते। प्रथमवारं धनः सूर्यावरकः यः पदार्थोऽपसृतः सोऽत्यन्तं कृष्णवर्णः। तदानीं प्रकाशस्य सर्वथाऽभावात् पृथिव्यादयो लोका अन्धकारनिमग्ना न दृश्यावस्थायामासन्। प्रथमवारं घनावरणापसरणेन पृथिव्यादिषु अतिक्षीणं ज्योतिरागतम् येन ते कृष्णवर्णा अदृश्यन्त। द्वितीयवारमावरणापगमेन सूर्यप्रकाशोऽधिकं स्फुटो जातः। स च रक्तवर्णः, तेन पृथिव्यादयो लोका रक्तवर्णा दृष्टाः। तृतीये पर्याये आवरणापगमे अधिकमात्रायां प्रकाशात् श्वेतवर्णवत् ते दृष्टाः। चतुर्थे च पर्याये आवरणापगमे स्वकीयवास्तविकरूपेण पृथिव्यादयो लोकाः प्रकाशमुपगताः। सैव पृथिव्या अविवशारूपता' इति, (पृ० १३८-१३९) तदपि भ्रान्तिविलसितमेव, स्वसिद्धान्तविरोधात्। तथाहि समाजिनो देवान् चेतनानैश्वर्यवतोऽसुरांश्च तादृशान् नाभ्युपगच्छन्ति। किन्तु तेषां मते पृथिव्यादयः प्राकृतपदार्था एव देवाः, त एवासुराः। इह तु युधिष्ठिरः केवलं मिथ्येतिहासप्रासादनिर्माणप्रावीण्येन युक्त्याभासैर्वंचनैर्यत्किञ्चित्प्रलपति। यज्ञपराणां ब्राह्मणानां वेदत्वनिरपेक्षप्रमाणत्वानभ्युपगमेन तद्विषयापलापेन चार्थानर्थकरणेऽपि न मनागपि जिह्रेति। कोऽयमसुरः स्वर्भानुः, चेतनो वा अचेतनो वा? नाद्यः, तस्य क्रमेण नियतग्रहेषु नियतावरणप्रक्षेपकत्वायोगात्। नान्त्यः, निष्प्रयोजनप्रवृत्त्यनुपपत्तेः। देवा अपि चेतना अचेतना वा? नान्त्यः, तेषां तदपाकरणे नियतप्रवृत्त्यनुपपत्तेः। नापि चेतनाः तादृशासाधारणशक्तिमतां देवानां युष्माभिरनभ्युपगमात्। किञ्च कैरुपायैः देवाश्चतुर्भिः पर्यायैः तमोऽपसारितवन्तः? किञ्च तेन तेषां किं प्रयोजनं सिद्धम्? किमर्थञ्च तद्वर्णनमित्यादि सर्वं तु न वर्णितम् किन्तु स्वेच्छयैवार्धजरतीयन्यायेन कस्यचिदेकस्य तात्त्विकवर्णनं कस्यचिदालङ्कारिकवर्णनमभ्युपेत्य धाष्टर्यमेव करोति।

सिद्धान्ते तु तैत्तिरीयसंहितायां (२।२।१) स्थले 'वायव्यं श्वेतमालभेत भूतिकामो वायुर्वा क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति.......वायवे नियुत्वत आलभेत ग्रामकामः' इत्येवमादिभिः पश्वादिर्भिविविधा यज्ञा विहिताः। तदुक्तं सायणेन—'भूतिकामो ग्रामकामः प्रजार्थी दीर्घरोगवान्। प्रजापश्वर्थिनां चैषां श्वेताद्याः पशवः श्रुताः॥' तानेतान् पशून् प्रथमानुवाके विधाय द्वितीये वरुणगृहीतादीनां पशव उच्यन्ते, प्रजापतिः प्रजा असृजत। ता

है। इससे उसमें वन्ध्यात्व भी गौण ही बताया है। यहाँ केवल अर्थज्ञान शून्य पाठक की निन्दा की गई है। आधिदैविक-भौतिकयज्ञेषु आज्य-समिदादि जैसे गौण हैं, वैसे ही यज्ञत्व भी गौण ही है। अतएव मुख्य यज्ञ उसके प्रतिनिधि नहीं हो सकते हैं। अध्यात्मज्ञानमय यज्ञ में ब्रह्म ही अग्नि है, ब्रह्म का ही स्रुक्-स्रुवादि के रूप में अर्पण, ब्रह्म की ही हवि, ब्रह्म का ही होम, और ब्रह्म ही फल होता है। इतना कह देने मात्र से कर्मकाण्ड प्रकरण में भी ब्रह्मरूप अग्नि आदि का ग्रहण नहीं होता है।

पृ० १४८ पर जो कहा है—'अश्व आदि के बांधने के लिये यूप हुआ करते हैं, क्योंकि उनका भागजाना संभव है। मनुष्यों का रज्जु से बांधना उचित नहीं है।'—वह भी ठीक नहीं है। क्योंकि नियोजन, पर्यग्निकरण आदि संस्कारविशेष हैं, अतः लौकिकपलायननिवृत्ति ही उनका प्रयोजन नहीं है। और अधिदेव में तो सूर्य पर यूपत्व का, रश्मियों पर रज्जुत्व का आरोप ही किया जाता है।

मानव श्रौतसूत्र के अनुसार पुरुषमेध में यूप में ही नियोजन करने के लिये कहा गया है। तुमने भी पृ० १४९ पर

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्मात् सृष्टाः पराचीरायन् ता वरुणमगच्छन् तां अन्वैत्......( तै० सं० २।२।२ ) इत्यादिभिः। अर्थात् प्रजापतिना सृष्टाः प्रजाः पराचीः पराङ्मुख्यः अपरक्ताः सत्यः अस्मात् प्रजापतेः आयन् अपगच्छन्। गत्वा च वरुणं प्राप्ताः। स च प्रजापतिः ताः प्रजा अनुगम्य मदीयाः प्रजाः पुनरेव मह्यं देहीति वरुणमयाचत। वरुणस्तु न ददौ। ततो वरुणमिदमब्रवीत्। एतासां प्रजानां मध्ये वरं श्रेष्ठं गृहीत्वा अवशिष्टास्ताः प्रजाः मह्यं देहीति। वरुणस्तासां प्रजानां मध्ये वरं श्रेष्ठं कञ्चित्पशुं मदीयोऽयमिति हस्तेनास्पृशत्। स च परीक्ष्यमाणः कृष्णः वर्णः सन्नेकेन श्वेतेन पादेन युक्तोऽभूत्। स च वरुणगृहीतः। यो जलजन्येन महोदरव्याधिना गृहीतः स्यात्तदर्थं ( तद्रोगनिवारणार्थं ) तेन वरुणदेवताकेन पशुना यजेत। इति वरुणयागविधानमुक्तम्। अनन्तरं वशां विधातुं प्रस्तौति—'स्वर्भानुरासुरः सूर्यं तमसा विध्यत्। तस्मै देवाः प्रायश्चित्तिमैच्छन्। तस्य यत्प्रथमं तमः......' (तै० सं० २।१।२।२)। स्वर्भानुरित्यसुरस्य कस्यचिन्नाम सिद्धान्ते देवा असुराश्च चेतनाः ऐश्वर्यवन्तोऽभ्युपेयन्ते। देवाः सृष्ट्यनुकूलाः सात्त्विकाः, असुराः सृष्टिप्रतिकूला राजसास्तामसाश्च। तेषां सङ्घर्षस्तत्र तत्र वेदेषु दृश्यते। स्वर्लोकगतां प्रभां नुदतीति स्वर्भानुः। स च पृथिव्या रूपं धृत्वा कृष्णवर्णः तमःपुञ्जो भूत्वा स्वीयेन तमसा सूर्यमाच्छाद्य जगदान्ध्यंकृतवान्। तमःपुञ्जरूपत्वं 'य त्वा सूर्यं स्वर्भानुस्तमसा विध्यदासुरः' इत्यस्यामृचि स्पष्टमाम्नातम्। पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते। छन्दोगाश्च 'यत्कृष्णं तदन्नस्येत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्वमामनन्ति। देवास्तस्मै तस्य सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तिं परिहारं विचिन्त्य नानाविधैः प्रकाशरूपैर्मण्यादिद्रव्यैः तमोऽघ्नन्। चतुर्भिः पर्यायैः अपसारितवन्तः। वस्तुतस्तु युधिष्ठिरः सायणभाष्यमवलोक्य विकृतं कृत्वा अनर्गलं प्रलपति स्वीयां नूत्नामिव कल्पनां दर्शयन्। तत्र प्रथमपर्याये अपसृतं तमः कृष्णवर्णा काचिदवि ( भेषी )रभूत्। द्वितीयपर्याये फल्गुनीलोहितवर्णा काचिदविरभूत्। तृतीये पर्यायेवलक्षी वेतवर्णा काचिदविरभूत्। अस्थ्नोऽप्युपरि वर्तमानः प्रकाशोऽप्यस्थः। कस्यचिन्मृतदेहस्य दीप्यमानमस्थि समादाय तदीयात्प्रकाशात् चतुर्थपर्याये तमोऽपाकृतवन्तः। तच्च तमोवशा वन्ध्या काचिदविरभूत। ततो देवा विचार्य परस्परमिदमब्रुवन् दैव्यादस्थ्नो जातत्वादयमुत्तमो देवपशुः। तमेतं कस्मै कामायोत्तमप्रयोजनाय आलब्धं करिष्याम इति। अथ विचारादूर्ध्वं तर्हि तदानीं पृथिव्या अल्पत्वं ओषधीनामनुत्पत्तिं च दोषद्वयमवेक्ष्य तत्परिहाररूपाय कामाय समर्थेभ्य आदित्येभ्यः तां वशामालभ्य पृथिवीविस्तारमोषध्युत्पत्तिं च सम्पादितवन्तः। 'देवा अब्रुवन् 'देवपशुर्वा अयं समभूत् कस्मा इममालप्स्यामहे इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयः। तामविं वशामादित्येभ्यः कामायालभन्त नवो वा अप्रथत पृथिव्यजायन्तौषधयः' एवमर्थवादेन प्रशस्य 'यः कामयेत प्रथेय पशुभिः प्रजया जायेयेति स एतामाविं वशामादित्येभ्यः कामाय आलभेत। आदित्यानेव कामं स्वेन भागधेयेनोपधावति त एवैनं प्रथयन्ति पशुभिः प्रजया च जनयन्ति ईदृग्विधान्यन्यान्यपि तत्रोक्तान्याख्यानानि।

तमोवेधरहितोऽप्यादित्यः कदाचित् प्रकाशमान्द्यात् विशेषेण न दीप्तवान्। तदर्थमेता वक्ष्यमाणा दूल्हा गललम्बितस्तनान्विता अजाः श्वेतास्तिस्रः आलभन्त।

अश्वमेध के स्वरूप का निरूपण करते हुए स्वीकार किया है कि आरण्य पशुओं का उत्सर्ग होता है और शेष बचे ग्राम्य पशुओं का आलंभन किया जाता है। यह सब अनुष्ठान ब्राह्मण और श्रौतसूत्र के अनुसार ही किया जाता है। परन्तु तुम्हारे मत में तो उन्हें प्रमाण नहीं माना जाता। तथापि जो वैदिक आस्तिक हैं, उनके मत के अनुसार तो मन्त्र-ब्राह्मण दोनों समान-रूप से वेद हैं, और दोनों का प्रामाण्य तथा अपौरुषेयत्व भी तुल्य है।

यह जो कहा है—'अश्वमेध, किसी आधिदैविक यज्ञ का प्रतिरूपक ही है। वह भी तुच्छ है, क्योंकि इसके विपरीत कहना ही उचित होगा। जहाँ अश्वादिकों का आरोप नहीं किया जाता, उसी को मुख्य अश्वमेध कहते हैं। किन्तु जहाँ सभी समारोपित ही हैं, उसे मुख्य अश्वमेध कैसे कहा जा सकेगा? यह जो कहा है—'लौकिक अश्वमेध में सार्वभौम राजा पृथक् और अश्वमेध पृथक् है,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वात्मानमेवाश्वं कल्पयित्वा स्वशिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं सम्पाद्य प्रजापतिरस्मीति भावनया तद्भावं प्रतिपद्यते ।' इति । स्पष्टार्थं भाष्यम् । सूर्यश्चक्षुः शिरसोऽनन्तरत्वात् सूर्याधिदेवतत्वाच्चक्षुषोः सूर्यदृष्टिः कर्त्तव्या । वातो वायुः प्राणः, तदीये व्यात्ते मुखे वैश्वानराग्निबुद्धिः कर्त्तव्या मुखस्याग्निदेवतत्वात् । संवत्सरो द्वादशमासस्त्रयोदशमासो वा आत्मा शरीरम् । आत्मापदेनात्र मध्यदेह उक्तः, 'मध्यो ह्येषामङ्गानामात्मा' इति शाङ्करभाष्योद्‌धृतश्रुतेः । अश्वस्य मेध्यस्य पुनर्वचनं सर्वत्र अनुषङ्गार्थम्, द्यौः पृष्ठम् ऊर्ध्वत्वसामान्यात् । अन्तरिक्षमुदरम् सुषिरत्वसाम्यात् । पृथिवी अस्य पाजस्यम्, वर्णव्यत्ययेन पादासनस्थानम्, दिशश्चतस्रोऽस्य पार्श्वे पार्श्वेन दिशां सम्बन्धात् ।

ननु दिशां संख्यावैषम्यादयुक्तमिदमिति चेन्न, अश्वस्य सर्वमुखत्वेन तदुपपत्तेः । अवान्तरदिशः पर्शवः पार्श्वास्थीनि ऋतवोऽङ्गानि संवत्सरावयवत्वात् । मासाश्चार्धमासाश्च पर्वाणि सन्धयः सन्धिसामान्यात् । अहोरात्राणि प्रतिष्ठाः बहुवचनात् प्राजापत्यदैवपित्र्यमानुषाणि अहोरात्राणि प्रतिष्ठाः पादाः । प्रतितिष्ठत्येतैरिति । अहोरात्रैः संवत्सरात्मा प्रतितिष्ठति पादैश्चाश्वः प्रतितिष्ठति । नक्षत्राणि अस्थीनि शुक्लत्वसाम्यात् नभः नभःस्था मेघा मांसानि, अन्तरिक्षस्योदरत्वेनोक्तेः । उदकं रुधिरं सेचनसामान्यात् । ऊवध्यमुदरस्थमर्धजीर्णमशनं सिकताः, विश्लिष्टावयवत्वसाम्यात् । सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यः, बहुवचनाच्च । यकृच्चक्लोमानश्च हृदयस्याधस्तात् दक्षिणोत्तरौ मांसखण्डौ क्लोमान इति नित्यबहुवचनमेकस्मिन्नेव । पर्वताः काठिन्यादुच्छ्रितत्वाच्च ओषधयश्च क्षुद्राः स्थावरा-वनस्पतयो महान्तो लोमानि केशाश्च यथायोग्यम् । उद्यन्नुद्गच्छन् सविता आमध्याह्नात् अश्वस्य पूर्वार्धः । नाभेरूर्ध्वमित्यर्थः । निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्धोऽपरार्धः, पूर्वापरत्वसाधर्म्यात् । यद्विजृम्भते गात्रं विनामयति विक्षिपति तद्विद्योतते विद्योतनम् मुखघनविदारणसाम्यात् । यद्विधूनुते गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसाम्यात् । यन्मेहति मूत्रंकरोत्यश्व-स्तद्वर्षति वर्षणं तत् सेचनसाम्यात् । वागेव शब्दएवास्यवाक् नात्रकल्पनेत्यर्थः ।

'अहर्वा' सौवर्णराजतौ महिमाख्यौ ग्रहौ अश्वस्य अग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमेतद्दर्शनम् । अहः सौवर्णो ग्रहः, दीप्तिसामान्याद्वै अश्वस्य पुरस्तात् महिमान्वजायत, अश्वस्य प्रजापतित्वात् प्रजापतिर्ह्यादित्यलक्षणोऽह्ना लक्ष्यते । तस्य ग्रहस्य पूर्वे पूर्वः समुद्रः योनिः । विभक्तिव्यत्ययः । योनिरित्यासादनस्थानम् । रात्रीराजतोग्रहो वर्णसामान्यात् जघन्यसामान्याद्वा । एनं मखं पश्चात्पृष्ठतो महिमान्वजायत । तस्य अपरः समुद्रो योनिः स्थानम् । तावेतौ महिमानौ ग्रहौ अभितः सम्बभूवतुः । इत्थमसावश्वो महत्वयुक्त इतिपुनर्वचनं स्तुत्यर्थम् । तथाच हयोभूत्वेत्यादिकं स्तुत्यर्थम् । वाहनत्वमस्य स्वाभाविकम् । देवादिसम्बन्धोऽश्वस्य स्तुतिः । वाज्यादयो जातिविशेषाः । समुद्रः परमात्मा एवास्य बन्धुः । बध्यते अस्मिन्निति बन्धुः । योनिः कारणमुत्पत्तिं प्रति । एवमसौ शुद्धयोनिः, शुद्धस्थिति-रितिस्तूयते 'अप्सुयानिर्वा अश्वः' इतिश्रुतेः । प्रसिद्ध एव समुद्रोऽस्ययोनिः । स्पष्टमन्त्राश्वमेधीयाश्च एव कालादिदृष्ट्या संस्कृत्य तत्र प्रजापतित्वसम्पादनम् यज्ञस्य वीर्यवत्तरत्वसिद्धयर्थं क्रियते । नैभिर्मन्त्रैरश्वमेधयज्ञस्यापलापः कर्तुं पार्यते । संवत्सरादेर्वा यज्ञत्वप्रतिपादने नैषां तात्पर्यम् । न वात्रादित्यस्यैव अश्वत्वम् अश्वमधस्वंवा निरूप्यते ।

प्रजापतिर्देवासुरानसृजत । तदनुयज्ञोऽसृज्यत । यज्ञं छन्दांसि । ते विष्वञ्चोव्यक्रामन् । सोऽसुरा ननु यज्ञोऽपक्रामद्यज्ञ छन्दांसि । ते देवा अमन्यत । इदमभूवन् यद्वयंस्म । ते प्रजापतिमुपाधावन् । सोऽब्रवीत् प्रजापतिः छन्दसां

भी 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते'—उन्नत पद को पाने में असमर्थ होने पर वे लोग निन्दा करने लगते हैं—इस नियम का अनुसरण कर ऊट टांग प्रलाप करने लगते हैं । अतः 'देवों के पास यज्ञ नहीं थे, किन्तु असुरों के पास से ही देवों के पास यज्ञ आये' इस प्रलाप का खण्डन हो ही चुका । यहाँ स्पष्ट है कि 'ते देवा विष्वञ्चो व्यक्रामन्.........कृतार्थताधिगता' यह सब छन्दों के वीर्य की प्रशंसा के लिये अर्थवाद है । तात्पर्य यह है कि सायणाचार्य को प्राचीन इतिहास का सम्यक् ज्ञान था । अतः सायणाचार्य पर युधिष्ठिर के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri.

वीर्यमादाय तद्वः प्रदास्यामीति। स छन्दसा(वीर्य)मादाय तदेभ्यः प्रायच्छत्। तदनु छन्दांस्यपाक्रामन्। छन्दांसियज्ञस्ततोदेवा अभवन् परासुरा य एव छन्दसां वीर्यं वेदाश्रावयास्तुश्रौषट् यज ये यजामहे वषट्कारोभवत्यात्मना परास्य भ्रातृव्यो भवति ....' (तै सं० ३।३।७) अत्र सोमाङ्गत्वेनाश्रावयेत्यादयोमन्त्रा विधीयन्ते तत्रार्थवादः। कदाचित् प्रजापतिर्देवानसुरांश्च पुरा असृजत सृष्टवान्। ताननु यज्ञोऽसृज्यत। यज्ञमनु छन्दांसि च ससर्ज। तदानीं ते देवाः परस्परमैकमत्याभावात् विष्वञ्चो नानागतयो भूत्वा व्यक्रामन् विविधं देशंगताः। अथ स यज्ञोऽसुराननुसृत्य देवेभ्योऽपाक्रामत। तञ्च यज्ञमनुसृत्य छन्दांस्यपि देवेभ्योऽपाक्रामन्। तदानीं ते देवाः परस्परमैकमत्यं प्राप्यैव विचारितवन्तः—यदैश्वर्यं प्राप्य स्थितास्म, तदिदंसर्वं प्राप्यासुरा एवेदानीमवस्थिता इति विचार्य च ते देवाः तथाविधपराभवमसहमानाः प्रजापतिमुपाधावन्। अथदेवैरुपासितः प्रजापतिस्तानब्रवीत्। छन्दसां वैदिकमन्त्राणां मध्ये वीर्यसारमादाय युष्मभ्यं तत्प्रदास्यामीत्युक्त्वा तथैवकृतवान्। अथ तद्वीर्यमनु सर्वाणि छन्दास्यसुरेभ्योऽपक्रम्य देवान् प्राप्नुवन्। तानि छन्दांस्यनुसृत्य यज्ञोऽप्यसुरेभ्योऽपक्रम्य देवान् प्राप्नोत्। ततो देवा विजयिनोऽभवन्, असुरास्तु पराभूताः। योवीर्यं वेद स स्वयमेव विजयी भवति। तस्य भ्रातृव्यः पराभवति। तस्माद् वीर्यं विदित्वा प्रयुञ्जीत। आश्रावयेत्यादिमन्त्रप्रपञ्चकं तद्वीर्यम्। एतेषां मन्त्राणां अर्थाः—यो वै सप्तदशमित्यस्मिन्ननुवाके। (तै० सं० १।६।११) प्रपञ्चिताः। इष्ट्यङ्गत्वेन तत्र विधिः, अत्र तु सोमाङ्गत्वेन। इत्ययं श्रीसायणाचार्योक्तोऽर्थः उक्तप्रघट्टकस्य। आसुरपक्षस्योत्कर्षं वर्णयन् युधिष्ठिरस्तु सायणाचार्ये इतिहासानभिज्ञत्वमारोपयन् तत्कृतमर्थमशुद्धं वदति। सरलः प्राञ्जलः स्पष्टः सायणोक्तोऽर्थस्तत्रकथमशुद्धिरिति नोक्तवान्। दयानन्दोऽपि तथैव किञ्चिदुक्त्वा सायणं निन्दति। तदीया अन्येऽपि 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते' इति न्यायमनुसरन्तः यत्किञ्चित्प्रलपन्ति। 'एतेन देवानां सविध एव यज्ञा नासन् किन्तु असुराणां सकाशादेव यज्ञःदेवानागतः' इति सर्वं प्रलपनमपास्तमेव। अत्र स्पष्टं 'ते देवाविष्वञ्चो व्यक्रामन्। ततः सोऽसुराननु यज्ञोऽपाक्रामत्, यज्ञापक्रमणात् देवैरैश्वर्यहीनत्वादेकमत्यं प्राप्य प्रजापतिमुपस्तुत्य तद् द्वारा छन्दसां वीर्यं प्राप्य पुनश्छन्दांसि यज्ञञ्च प्राप्य कृतार्थताधिगते'ति छन्दसां वीर्यस्य प्रशंसाऽर्थोऽयमर्थवादः। तस्मात् सायणाचार्येण प्राचीनेतिहासस्य सम्यगज्ञानात् (तै० संहितायां ३।३।७) स्थले भाष्ये अशुद्धं व्याख्यातमिति युधिष्ठिरोक्तिरपास्ता, युधिष्ठिरस्यैवेतिहासानभिज्ञत्वात्। एवमेव तत्रतत्रवचनाभासानुपन्यस्यानर्गलं प्रलपति।

एवमेव—'प्राह्लादिर्वै कपिलो नामासुर आस। स एतान् भेदान् चकार देवैः सह स्पर्धमानः' (बौधायनधर्मसूत्र २।१२।३०) इति वचनमुपन्यस्यता युधिष्ठिरेण अशुद्धोऽभिप्रायः प्रदर्शितः, स्थलसङ्केतोऽपि अशुद्धोदत्तः। बौधायनधर्मसूत्रे (२।११।२८) इति स्थलसङ्केतेन भाव्यम्। न तत्र सूत्रे वर्णाश्रमभेदवर्णनं केवलमाश्रमभेदस्यैव तत्र विवक्षितत्वात्। तथाहि एतस्मात् पूर्वस्मिन् 'ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम्' (बौधायनधर्मसूत्र २।११।२७) इति सिद्धान्तपक्षमुक्त्वा कपिलासुरमतेन तद्भेदं प्रतिपाद्य तत्रैव 'तान्मनीषी नाद्रियेत' (बौधायनधर्मसूत्र २।११।२८) इति तन्मतखण्डनमेव दृश्यते। तथैव 'देवाः पराजिग्यमाना असुराणां वेशत्वमुपायन्' (मैत्रायणीसंहिता २।३।७) इति स्थाने 'वैश्य' मितिमिथ्यापाठं परिकल्प्यायमनर्गलं स्वार्थं साधयितुं प्रवृत्तः। 'दिशोवायूरविश्चन्द्रः पृथ्व्यग्नी विष्णुरेव च। इन्द्रः प्रजापतिर्मित्रमग्नयो दश भामिनि। दशेन्द्रियाणि होतॄणि हवींषि दशभामिनी। विषयानामसमिधो दृश्यन्ते (हूयन्ते) तु दशाग्निषु। चित्तं स्रुवश्च वित्तं च पवित्रं ज्ञानमुत्तमम्। सुविभक्तमिदं सर्वं जगदासोदिति श्रुतम्॥' 'शरीरभृद्गार्हपत्यस्तस्मादन्यः प्रणीयते। मनश्चाहवनीयस्तु तस्मिन् प्रक्षिप्यते

द्वारा किये आक्षेप का खण्डन हो जाता है। वस्तुतः युधिष्ठिर ही इतिहास से अनभिज्ञ हैं। जहाँ तहाँ प्रमाणाभासों का उपन्यास कर अनर्गल प्रलाप मात्र करता है। इसी प्रकार 'प्राह्लादिर्वै कपिलो स्पर्धमानः'—(बौधा० ध० सू० २।१२।३०) इस वचन को उद्धृत कर युधिष्ठिर ने उसका अभिप्राय अशुद्ध प्रदर्शित किया है, और स्थलसंकेत भी अशुद्ध किया है। स्थलसंकेत २।१२।३०

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हविः ॥ ततो वाचपतिं यज्ञे तं मनः पर्यवेक्षते' ( म०भा० आश्वमेधिकपर्व २१।३८ ) तथैव पञ्चाग्निविद्यायां 'अयं वाव लोको गौतमाग्निस्तस्यादित्य एव समित् रश्मयो धूमश्चन्द्रमा अङ्गाराः नक्षत्राणि विस्फुल्लिङ्गाः तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा भवति' (छा० उ० ५।४।१–२) 'पर्जन्यो वाव गौतमाग्निः वायुरेव समित् अभ्रं धूमो विद्युदग्निरशनिरङ्गारा ह्लादनयो विस्फुलिङ्गाः, तस्मिन्नग्नौ देवाःसोमं राजानं जुह्वति तस्या आहुतेः वर्षं भवति' (छा०५।५) 'पृथिवी वाव गौतमाग्निः, तस्या संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिरवान्तरदिशो स्फुलिङ्गाः तस्मिनग्नौ देवावर्षं जुह्वति तस्या अन्नं भवति ।' 'पुरुषो वाव गौतमाग्निः तस्य वागेव समित् प्राणो धूमः जिह्वार्चिः श्रोत्रं विस्फुल्लिङ्गाः तस्मिन्नग्नौदेवा अन्नं जुह्वति तस्या अङ्गात् रेतः सम्भवति ।

'योषावावगौतमाग्निः तस्या उपस्थ एव समित् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गाराः अभिनन्दाः विस्फुलिङ्गाः तस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतगर्भः सम्भवति' ( छा० उ० ५।८।१–२ ) इत्यादिषु गौणमेवाग्नित्वादिकमारोप्यत उपासनार्थम् । तथैव प्राणाग्निहोत्रे तस्य वा एतस्यात्मा वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येवपादा वुरएव वेदिः लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः ' (छा० उ० ५।१८) इत्यादिषु वेदिर्बर्हिगार्हपत्यान्वाहार्यपचनाहवनीयादिकं काल्पनिकमेवारोप्यते । तथैव युद्धेऽपि यज्ञकल्पनं दृश्यते । यथा—'·······धार्तराष्ट्रस्य शस्त्रयज्ञो भविष्यति । आध्वर्यवं च ते कृष्ण क्रतावस्मिन् भविष्यति । होता चैवात्र बीभत्सुः सन्नद्धः सकपिध्वजः । गाण्डीवं स्रुक् तथा चाज्यं वीर्यं पुंसां भविष्यति ॥ ऐन्द्रं पाशुपतं ब्राह्मं स्थूणा कर्णं च माधव । मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥ गीतं स्तोत्रं स सौभद्रः सम्यक् तत्र भविष्यति । उद्गाता च पुनर्भीमः प्रस्तोता सुमहाबलः ॥ विनदन् स नरव्याघ्रो नागानीकान्तकृद्रणे । स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः । जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति । शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन ॥ उत्कृष्टसिंहनादश्च सुब्रह्मण्यो भविष्यति । नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ॥ शामित्रं तौ महावीर्यौ सम्यक् तत्र भविष्यतः । कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः ॥ यूपाः समुपकल्पन्तामस्मिन् यज्ञे जनार्दन । कर्णिनालीकनाराचा वत्सदन्तोपबर्हणाः ॥ तोमराः सोमकलशाः पवित्राणि धनूंषि च । असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ॥ हविस्तु रुधिरं कृष्ण तस्मिन् यज्ञे भविष्यति । इध्माः परिधयश्चैव शक्तयो विमला गदाः । सदस्या द्रोणशिष्याश्च कृपस्य च शारद्वतः ॥ इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना । प्रति प्रास्थानिकं कर्म सात्यकिश्च करिष्यति । दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः । अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ दक्षिणात्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् । वैतानिके कर्ममुखे जातो यत्कृष्णपावकात् । यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ॥ पुनश्चितिस्तदाचास्य यज्ञस्याथ भविष्यति । दुःशासनस्य रुधिरं यदा पश्यति पाण्डवः ॥ आनर्दं नर्दतस्तस्य तदा सूयं भविष्यति । यदा द्रोणं च भीष्मञ्च पाञ्चाल्यौ पातयिष्यतः ॥ तदा यज्ञावसानं तद्भविष्यति जनार्दन । दुर्योधनं यदा हन्ता भीमसेनो महाबलः ॥ तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव । स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः ॥

नहीं है, बल्कि २।१।१।२८ है ! इस सूत्र में वर्णाश्रम के भेद का वर्णन नहीं है, केवल आश्रमभेद ही वहाँ विवक्षित है । तदैव मैत्रायणी संहिता २।३।७ में 'वैशत्व' की जगह 'वैश्यम्' इस मिथ्यापाठ की कल्पना कर अनर्गल स्वार्थसाधन में इसकी प्रवृत्ति दिखाई दे रही है ।

छा० उपनिषद् आदि में उपासनार्थ गौण अग्नित्व आदि का आरोप किया गया है । उसी तरह वेदि-बर्हि-गार्हपत्य-अन्वाहार्यपचन-आहवनीय आदि सब काल्पनिक ही आरोपित किये गये हैं । युद्ध में भी यज्ञ की कल्पना की हुई महाभारत में दिखाई पड़ती है । तै० ब्रा० में यूप के अन्तरालों में रखे हुए जो आरण्य पशु हैं, उन पशुओं के समाप्तिपर्यन्त-प्रयाग का निन्दामुखेन निषेध किया गया है । रोहितादि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हतेश्वरा हतपुत्रा हतनाथाश्च केशव। रुदन्त्यः सह गान्धार्या श्वगृध्रकुरराकुले ॥ स यज्ञोऽस्मिन्नवभृथः भविष्यति जनार्दन ॥' (म० भा०) सर्वत्रात्र प्रसिद्धयज्ञगता एव भावा युद्धे परिकल्प्यन्ते। यूपान्तरालेषु धारिता आरण्या ये पशवः तेषां पशूनां समाप्तिपर्यन्तं प्रयोगं निन्दामुखेन निषेधति—'यदारण्यैः संस्थापयेत व्यवस्येतां पितापुत्रौ व्यध्वानः क्रामेयुः विदूरं ग्रामयोर्ग्रामान्तौ स्याताम्। ऋक्षीकाः पुरुषव्याघ्राः परिमोषिणः आव्याधिनीस्तस्करा अरण्येष्वाजायेरन्' (तै० ब्रा० ३।९।१ इति)। 'इन्द्राय राज्ञे सूकरः' इत्याद्यनुवाकेषूक्ता आरण्याः पशवो यूपान्तरालेषु धारयित्वोपाकृताः। तैः पशुभिर्यद्यन्यपशुवत् पाशुकप्रयोगं समापयेत् तदानीमेते दोषाः प्रसज्येरन् तदेवोदाह्रियते—पितापुत्रौ परस्परं व्यवस्येयाताम् विरुद्धाध्यवसायौ कलहकारिणौ भवेताम्। अध्वानश्च विक्रामेयुः। अध्वशब्देन मार्गे गच्छन्तो जना उपलक्ष्यन्ते। ते च परस्परं विरुद्धं क्रामेयुः। परस्परं बाधकाः स्युः। आरण्यपशूनां तथाविधत्वात्। किञ्च ग्रामान्तौ ग्रामसीमानौ तयोर्ग्रामयोर्विदूरं यथा भवति तथा स्याताम्। ग्रामसीम्नोरत्यन्तदूरत्वे मध्येमार्गं भयकारणं महारण्यमुत्पद्यते इत्यभिप्रायः, तथा सति आरण्यकेषु ऋक्षीकादयः सर्वत उत्पद्येरन्। ऋक्षीकाः भल्लूकप्रभृतयो हिंसका मृगाः, व्याघ्रा इवातिक्रूराः पुरुषव्याघ्राः, परिमोषिणः मार्गचौराः चौरप्रभूणां सेना आव्याधिन्यः तस्करा मायाविस्वेनापहर्तारः। तत्र पूर्वपक्षे तदाहुः अपशवो वा एते यदारण्याः यदारण्यैः संस्थापयेत्। क्षिप्रं यजमानमरण्यं मृतं हरेयुः अरण्याय ह्यारण्याः पशव इति यत्पशूनालभेत अनवरुद्धा अस्य पशवः स्युः। यत्पर्यग्निकृतानुत्सृजेत यज्ञवेशसं कुर्यात्' (तै० ब्रा० ३।९।३) आक्षेपवादिन एवमाहुः, यत एते आरण्यास्ते कर्मयोग्याः पशवो न भवन्ति पशुकार्याभावात्। तथाहि किमेते पशवः समाप्तिपर्यन्तमनुष्ठेयाः किं तेषामालम्भ एवमाभूत्, अथवा प्रारब्धानां तेषां पर्यग्निकरणादूर्ध्वमुत्सर्गं इति विचारणीयम्। तत्र समाप्तिपर्यन्तं प्रयोगे क्षिप्रं स्वल्प एवकाले मृतं यजमानं दाहार्थमरण्ये पुत्रादयो हरेयुः, आरण्यपशुवधस्याल्पायुष्ट्वहेतुत्वात्। यस्मादारण्यानां पशूनामरण्यमेवायतनम् अतो यजमानस्यापि तत्रैवायतनम्। नापि द्वितीयः पक्षो युक्तः—आरण्यानामालम्भाभावे यजमानेन पशवो न प्राप्येरन्। पर्यग्निकरणादूर्ध्वमुत्सर्गे तु पशुप्रयोगसमाप्त्यभावात् यज्ञविघातं कुर्यात्। अथसमाधानपक्षः—'यत्पशूनालभते तेनैव पशूनवरुन्धे यत्पर्यग्निकृतानुत्सृजत्ययज्ञवेशसाय अवरुद्धा अस्य पशवो भवन्ति न यज्ञवेशसं भवति न यजमानमरण्यं मृतं हरन्ति' (तै० ब्रा० ३।९।१।) इति। आरण्यान् पशूनुपालब्धुमुपाकरणं करोति। तेनालम्भदोषाभवात् पशुप्राप्तिर्भवति। उपाकृतेषु पर्यग्निकरणस्यानुष्ठितत्वान् न यज्ञवेशसं भवति तदेतद्दोषद्वयराहित्यमुपसंहर्तुमवरुद्धा अस्य पशवो भवन्तीत्यादिकयुक्तम्। आरण्यपशूनां वधाभावात् यजमानस्य शीघ्रमरणादिकं न भविष्यति। अग्निष्ठयूपव्यतिरिक्तेषु यूपेषु नियुक्ता रोहितधूम्ररोहित इत्यनुवाकोक्तानामष्टादशिनां ग्राम्यपशूनां समाप्तिपर्यन्तं प्रयोगं विधत्ते —ग्राम्यैरिति। ग्राम्यैः संस्थापयति एते वै पशवः क्षेमानाम स पितापुत्राववस्यत समध्वानं क्रामन्ति समन्तिकं ग्रामयोर्ग्रामान्तौ भवतः नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणः आव्याधिनीस्तस्करा अरण्येष्वेव जायन्ते। (तै० ब्रा० ३।९।१।४) रोहितादिभिः पशुभिः प्रयोगं समापयेत्। नषां पाशुकं तत्तदङ्गावदानपूर्वकं देवयजनं कुर्यात्।

पशुओं से प्रयोग की समाप्ति करनी चाहिये। गवालम्भ और अविमेध के सम्बन्ध में पहले बहुत बता चुके हैं। चातुर्मास्य के वरुण प्रघासपर्व में ब्राह्मण तथा श्रौतसूत्र ने पिष्टमय मेष-मेष्यादि के प्रयोग का विधान किया है।

जो अज शब्द को लक्ष्य कर 'अजति सातत्येन गच्छति इति अजः, न जायत इत्यजः' इन दो व्युत्पत्तियों से दो अर्थ संभव होते हैं—एक सतत गतिशील पदार्थ, और दूसरी व्युत्पत्ति से जो उत्पन्न नहीं होता, नित्य वर्तमान है जैसे—आत्मा, परमात्मा और प्रकृति। सूर्यमण्डल के चारों ओर भ्रमणशील पृथिवी ही 'अज' शब्द से कही गई है। दृढ़तारहित भूमि, अवि के समान कोमल होने से उसे 'अवि' कहा गया है। वैसे ही अग्नीषोमीय अज भी अग्नीषोमगुणवाली प्रारंभिक अकृष्टपच्या पृथिवी का वाचक है। गोमय आदि सामप्रधान द्रव्यों के याग से ऊसर भूमि को अग्नीषोमीय धर्मवाली कृषियोग्य बनाना अग्नीषोमीय पशु का आलंभन है। किन्तु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एते ग्राम्याः पशवः क्षेम इत्येतन्नामार्हन्ति, तैः प्रजोपकारदर्शनात्। तस्मादारण्यपशुस्थापने पितापुत्रविरोधादयो ये दोषाः पूर्वमुपन्यस्तास्तेऽत्र न भवन्ति। संस्थापनं वधः। सम्पूर्वकस्य तिष्ठतेर्वधार्थत्वात्। 'अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति सर्वत्वाय न्वेपत्नीयूप उच्छ्रीयते तत्त्वाष्ट्रपशुमालभते त्वष्टावैसिक्तं रेतोविकरोति तदेषएवैतत्सिक्तं रेतो विकरोति मुष्करो भवत्येषवै प्रजनयितायन्मुष्करस्तस्मान्मुष्करो भवति तन्न संस्थापयेत् पर्यग्निकृतमेवोत्सृजेत् सयत्संस्थापयेत् प्रजावैहान्तमियात्तत्प्रजामुत्सृजति तस्मान्न संस्थापयेत् पर्यग्निकृतमेवोत्सृजेत्' ( श० ३।७।३।२ ) अत्रापि वधो निषिद्धः। पर्यग्निकृतस्य उत्सर्ग एव विहितः। यथा तैत्तिरीये अश्वमेधप्रसङ्गे ग्राम्यपशूनां संस्थापनमारण्यानान्तूत्सर्ग उक्तः, तथैव शतपथेऽपि।

'स यद्ग्राम्यैः संस्थापयेत् समध्वानः क्रामेयुः समन्तिकं ग्रामयोर्ग्रामान्तौ स्यातास् नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणः आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन् यदारण्यैर्व्यध्वानः क्रामेयुर्विदूरं ग्रामयोर्ग्रामान्तौ स्यातास्' (श० १३।२।४।२) 'तदाहुः अपशुर्वा एष यदारण्योनैतस्य होतव्यं यज्जुहुयात् क्षिप्रं यजमानमरण्यं मृतं हरेयुररण्यभागाह्यारण्याः पशवो यन्नजुहुयाद्यज्ञवेशसं स्यादिति पर्यग्निकृतानेवोत्सृजन्ति तन्नेव हुतन्नाहुतन्न यजमानमरण्यं हरन्ति न यज्ञवेशसं भवति' (श० १३।२।४।३) 'ग्राम्यैः संस्थापयति विपितापुत्रावयस्यत समध्वानः क्रामन्ति समन्तिकं ग्रामयोर्ग्रामान्तौ भवतो नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजाय' ( श० १३।२।४।४ ) तत्र हरिस्वामिनः—आरण्यान् पशून् पर्यग्निकृतानेवोत्सृजन्ति, ग्राम्यैः संस्थापयतीत्येतावदत्र विधीयते अभिप्रायस्तु पूर्ववदेव। किंच स्पष्टमेव शतपथे अश्वादिसंज्ञपनीयपशूनां शासे भेदउक्तः। 'हिरण्मयोऽश्वस्य शासोभवति लोहमयाः पर्यङ्ग्यानामायसा इतरेषाञ्ज्योतिर्वै हिरण्यं राष्ट्रमश्वमेधः ज्योतिरेव तद्राष्ट्रे दधाति' ( श० १३।२।२।१६ ) हिरण्यपरिष्कृतं विशसनसाधनं विहितमश्वस्य। अन्येषां पशूनान्तु ताम्रपरिष्कृताः शासा विहिताः। 'स्वयंवाजिस्तन्वं कल्पयस्वेति स्वयं रूपं कुरुष्व यादृशमिच्छसीत्येवेनम्' ( श० १३।२।७।११ )। 'न वा उ एतन्म्रियसे नरिष्यसीति प्रश्वासयत्येवेनन्तद्देवाँ इदेषि पथिभिः सुगेभिरिति देवयानमेव पथो दर्शयति' ( श० १३।२।७।१२ ) इत्येवमादिभिरश्वं महिम्ना समर्धयति प्रश्वासयति देवयानमार्गं च दर्शयति। 'अग्निः पशुरासीत् तेनायजन्त स एतं लोकमजयत्। यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि। वायुः पशुरासीत् तेनायजन्त स एतं लोकमजयत यस्मिन् वायुः स ते लोकः.......।' 'सूर्यः पशुरासीत् तेनायजन्त...यस्मिन् सूर्यः सते लोको भविष्यति तं जेष्यसि' ( श० १३।२।७।१३–१४–१५ ) अग्निवायुसूर्यास्ते पूर्वं पशव आसन्। एभिर्यजन जातम्। तेनैव ते अग्नि-वायु-सूर्यपदानि प्राप्य महर्धयः सञ्जाताः। हे अश्व तवापि यज्ञ उपयुक्तत्वेन तद्वदेव तेषां लोकान् त्वमपि प्राप्स्यसि एवमाश्वास्य प्रोक्षणादिभिः संस्कृत्य देवा वा उदश्च स्वर्गं लोकन्न प्राजानंस्तमश्वः प्राजानात् यदश्वेनोदश्चो यन्ति स्वर्गस्य

---

यह सब कुशकाशावलम्बन मात्र ही है। क्योंकि अज शब्द छाग में रूढ़ है। योग से रूढ़ि बलवान् होती है। मुख्यार्थ के संभव रहते गौणार्थ का स्वीकार करना उचित नहीं रहता।

पृ० १५६ पर ऐतरेय ब्राह्मण के वचनों को देकर जो यह बताने का प्रयत्न किया है कि 'समस्त पशु अयज्ञीय हैं, केवल पुरोडाश ही यज्ञीय है।' किन्तु वह प्रयत्न भी विफल है। क्योंकि पशुपुरोडाश की प्रशंसा में तात्पर्य रहने से स्वार्थ में तात्पर्य नहीं है। अन्यथा तुम्हारे मत में भी उससे पूर्व तत्तत्पशुओं का आलभन सिद्ध रहने से पृथिव्यादि प्राक्तन पशुओं के आलंभन से 'अग्निदेव मुख्य यज्ञ होता है' इत्यादि कथन निराधार ही होगा। किञ्च—तत्तत् आलम्भनों के विधान, स्वार्थपर्यवसायी रहने से उनमें आलंभन की ही प्रधानता है। और अर्थवाद तो स्तुत्यर्थ रहने से उसका स्वार्थ में पर्यवसान नहीं है, अतः उसमें स्वार्थ की प्रधानता नहीं है। एवं च 'अतत्प्रधानों की अपेक्षा तत्प्रधानों की प्रबलता हुआ करती है, इस नियम के अनुसार तत्प्रधानविधि के विरुद्ध होने से अर्थवाद की

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लोकस्य प्रज्ञात्यै वासोऽधिवासंहिरण्यमित्यश्वायोपस्तृणन्ति यथा नान्यस्मै पशवे तस्मिन्नेनमधिसंज्ञपयन्त्यरेवैनन्तत्पशुभिर्व्याकुर्वन्ति।

'घ्नन्ति वा एतत्पशुं यदेनं संज्ञपयन्ति प्राणायस्वाहा व्यानायस्वाहेति संज्ञप्यमाने आहुतीर्जुहोति प्राणानेवास्मिन्नेतद्दधाति तथाहास्यैतेनजीवनैव पशुनेष्टं भवति' ( श० १३।२।८।१-२ ) इति श्रुतौ स्पष्टमश्वस्य संज्ञपनमुक्तम्।

गवालम्भसम्बन्धेतु पूर्वं बहुप्रपञ्चितम्। अविमेधसम्बन्धेऽपि पूर्वमेव बहूक्तम्। चातुर्मास्य वरुणप्रघासपर्वणि ( श० ५।५।२।१५-१६ तथा कात्यायनश्रौतसूत्र ५।३।७ ) इत्यादिषु तथाविधानादेव पिष्टमयमेषभेष्यादिप्रयोगः।

यत्तु अजशब्दं प्रकृत्य—अजतिसातत्येन गच्छतीत्यजः, न जायत इत्यजः, इति व्युत्पत्तिद्वये गतिमत्पदार्थो आत्मपरमात्मप्रकृतयो गृह्यन्ते। सूर्यमण्डलस्य चतुर्दिक्षुभ्रमणशीलायाः पृथिव्या एवाजशब्दवाच्यता। अदृढाया भमेरवेरिवकोमलत्वादवित्वम्। अकृष्टपच्याभूमिरजा। तथा च सोमप्रधानैर्गोमयादिभिः ऊषरभूमेः कृषियोग्यतासम्पत्तिरेव अग्नीषोमीयपश्वालम्भन( पृ० १५५ )मिति, तदेतत्सर्वं कुशकाशावलम्बनम्, अजपदस्य छागेरूढत्वात्। रूढ्याच योगापहारात्। नहि सम्भवति मुख्यार्थत्वे गौणार्थाभ्युपगमो युक्तः।

यत्तु—पुरुषं ह्वै देवाःपशुमालभन्त। तस्मादालब्धान्मेध उदक्रामत्। सोऽश्वं प्राविशत्। तस्मादश्वो मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जंत सकिंपुरुषोऽभवत्। तेऽश्वमालभन्त। सोऽश्वादालब्धादुदक्रामत्। स गां प्राविशत्। तस्माद् गौर्मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जंत सगौरमृगोऽभवत्। ते गामालभन्त स गोरालब्धादुदक्रामत्। सोऽविं प्राविशत्। तेनाविर्मेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जंत सगवयोऽभवत्। तेऽविमालभन्त। सोऽवेरालब्धादुदक्रामत्। सोऽजंप्राविशत्। तस्मादजोमेध्योऽभवत्। अथैनमुत्क्रान्तमेधमत्यार्जंत सउष्ट्रोऽभवत्। सोऽनेज्योकूतभामिवारमत। तस्मादेष एतेषां पशूनां प्रयुक्ततमोयदजः। तेऽजमालभन्त। सोऽजादालब्धादुदक्रामत् स इमां प्राविशत्। तस्मादियं मेध्याऽभवत्। अथेनमुत्क्रान्तमेधमत्यार्जंत स शरभोऽभवत्। ते उत्क्रान्तमेधा अमेध्याः पशवः। तस्मादेतेषां नाश्नीयात्। तमस्यान्वगच्छन्त। सोऽनुगतोव्रीहिरभवत्। तद्यत्पशौ पुरोडाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्.......' ( ऐ० ब्रा० २।८ ) 'सवा एष पशुरेवालभ्यते यत्पुरोडाशः' ( ऐ० ब्रा० २।९ ) अत्र 'आलब्धादित्यस्य आलब्धुमुद्युक्तादित्यर्थः। 'अत्यार्जंत' इत्यस्य अतिशयेन वर्जितवन्त इत्यर्थः। इतिब्राह्मणमुद्धृत्योक्तम् 'याज्ञिकानां मतेन यज्ञयागात् पश्चात् क्रियमाणस्य पशुपुरोडाशस्य प्रशंसानेन क्रियते। किन्तु तावतापि स्पष्टमेतद्विज्ञायते यत् पुरुषः, अश्वः, गौः, अविः, अजः इतिसर्वेऽप्ययज्ञीयाः। केवलं पुरोडाश एव यज्ञीय इति' ( पृ० १५६ ) तदपि यत्किञ्चित्। पशुपुरोडाशस्य प्रशंसायां तात्पर्येण स्वार्थे तात्पर्याभावात्। अन्यथा त्वन्मतेऽपि ततःप्राक् तत्तत्पशूनामालम्भनसिद्ध्या पृथिव्यादिप्राकृतपश्वालम्भनेनाधिदेवो मुख्यो यज्ञोभवतीत्याद्युक्तिर्निरालम्बनैव स्यात्।

किञ्च तत्तदालम्भनविधानानि स्वार्थपर्यवसायत्वेन तत्प्रधानानि। अर्थवादस्तु स्तुत्यर्थेन स्वार्थापर्यवसायित्वादतत्प्रधानः। 'तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसीतिन्यायेन तत्प्रधानविधिविरुद्धत्वादर्थवादस्य दुर्बलत्वेन बाध एव

दुर्बलता सिद्ध हो जाती है, इसलिये उसका बाधित होना उचित ही है। किंच—अर्थवाद को देखकर जबतक पश्वालंभन निषेध की कल्पना करेंगे उसके पूर्व ही प्रत्यक्ष जो आलभन विधि है, उससे उसका विधान हो जायगा। एवं च शीघ्र उपस्थित होने वाले विधानों से विलम्बोपस्थितिक निषेधों का बाध ही सिद्ध होता है। इससे अजादि पशुओं में जो तुम्हारी अमेध्यत्वोक्ति है, उसका खण्डन हो जाता है। क्योंकि निन्दावाक्य की प्रवृत्ति निन्द्य की निन्दा के लिये नहीं हुआ करती, अपितु विधेय की स्तुति के लिये हुआ करती है।

यह जो कहा है कि 'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' नियम से पशु देवता के लिये ही पुरोडाश का विधान भी किया

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

युक्तः। किञ्च यावदनेनार्थवादेन पश्वालम्भननिषेधः परिकल्प्यते तावत्प्रत्यक्षालम्भनविधिभिः तद्विधानं सिद्ध्यतीति, शीघ्रोपस्थितिकैर्विधानैर्विलम्बोपस्थितिकस्य निषेधस्य बाध एव सिद्ध्यति। एतेन अजादीनाम्मेध्यत्वोक्तिरपास्ता, नहि निन्दानिन्द्यं निन्दितुं प्रवर्तते, किन्तु विधेयं स्तोतुमितिन्यायात्।

यत्तु—'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश' इति नियमानुसारेण छिद्रपिधानार्थं पुरोडाशो नोपपद्यते। यदि यज्ञे मारितः पशुः स्वर्गे जीवितो भवति पशोर्यान्यङ्गानि निष्कासितानि तेषां छिद्राणि पुरोडाशेन पूर्यन्ते, येन प्रमाणेन स्वर्गो लभ्यते तेनैव तदङ्गपूर्तेरपि सम्भवात्। यदि स्वर्गेऽपि स पशुरेवभवेत्तदा को विशेषः स्यात्? 'किं स्वर्गेऽपि पशवो भवन्ति' (पृ० १५६-१५७)। इत्यादिकं यदधिक्षिप्तं तत्तु नास्तिक्यमेव, ब्राह्मणप्रामाण्यानुपगमहेतुत्वात्। नहि श्रुत्युक्तेऽर्थे चोद्यं भवति? तत्तु श्रुतिरेवाह—'यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनुनिर्वपति तद्यत्पुरोडाशमनुनिर्वपति तद्यत्पुरोडाशमनुनिर्वपति। सर्वेषां वा पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात् पुरोडाशमनुनिर्वपति' (श० ३।८।३।१) या देवता पशोः पुरोडाशोऽपि तद्देवताकः कर्त्तव्यः पुरोडाशानुनिर्वापं पूर्णमासस्य पशोः समृद्धिहेतुत्वेन प्रशंसति-समर्धयतीति। सर्वपशूनां मेधरूपत्वमैतरेयब्राह्मणे 'पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्' (ऐ० ब्रा० २।८) इत्यादिनोक्तम्। त्वद्रीत्या तु पुरोडाशनिर्वापोऽपि निरर्थक एव। होमस्य वायुशुद्धिहेतुत्वेन देवतातृप्त्याद्यनुपगमात्। सिद्धान्ते तु पशोः समृद्धिहेतुत्वेन पुरोडाशनिर्वाप उक्तः। शास्त्रैकगम्येऽर्थे कुचोद्यस्य निरवकाशत्वात्।

'अथ यद्वपया प्रचर्य पुरोडाशेन प्रचरति मध्यतो वा इमां वपामुत्खिदन्ति मध्यत एवैनमेतेन मेधेन समर्धयन्ति कृत्स्नं करोति तस्माद् वपया प्रचर्यैतेन पुरोडाशेन प्रचरति' (श० ३।८।३।२)। पुरोडाशस्य पशुच्छिद्रपूर्तिप्रयोजनन्तु श्रुत्युक्तमेव। श्रुतिस्तु दर्शिता। वस्तुतस्तु पुरोडाशनिर्वापोऽयं पाशुककर्मप्रकरणगतत्वेन संस्कारार्थो न स्वतन्त्रः।

'अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्।' इति वचनन्तु बहुनिबन्धकृच्चर्चितत्वात् प्रमाणभूतमेव। यत्तु 'आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुः। नालम्भाय प्रक्रियन्तेस्म।' (चरकसंहिताचिकित्सास्थान १९।४) इत्यतीसाररोगोत्पत्तिप्रसङ्गे 'अतश्च प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण

है। याज्ञिकजन इस पशुपुरोडाश को छिद्र अपिधान (काटे गये अंगों के छिद्र को ढकने पूर्ण करने) के लिये मानते हैं। उनका कहना है कि जब यज्ञ में मारा गया पशु स्वर्ग में जीवित होता है, तब उस पशु के शरीर से जो निकाले गये अंगों के छिद्र हैं, उनकी पूर्ति इस पशुपुरोडाश से होती है। वस्तुतः यह कल्पना मात्र है। क्योंकि यदि यज्ञ में हुत पशु को स्वर्ग की प्राप्ति होती है, तो क्या उसीके प्रभाव से वह सर्वाङ्गपूर्ण न हो जायेगा? और यज्ञ-हत पशु को स्वर्ग में भी यदि पशुयोनि ही प्राप्त होती है, तो वह उसे यहाँ भी प्राप्त ही है, फिर विशेषता क्या हुई? साथ ही यह भी चिन्त्य है कि क्या स्वर्ग में पशु भी होते हैं? पृ० १५६-१५७।

इत्यादि जो अधिक्षेप युधिष्ठिर ने किया है, उसमें हेतु एकमात्र उसका नास्तिक्य (नास्तिकता) ही है। वेद का जो दूसरा भाग 'ब्राह्मण' है, उसे प्रमाण न मानने के कारण ही युधिष्ठिर की यह नास्तिकता है। जैसे सैनिक शासन (मिलिट्रि-आर्डर) में 'क्यों' (चोद्य) इस प्रकार प्रश्न करना मूर्खता समझी जाती है, वैसे ही भगवती श्रुति के द्वारा बताये गये अर्थ में कुचोद्य करते बैठना भी निरी मूर्खता ही है। शतपथब्राह्मण बता रहा है कि 'जो देवता, पशु की हो, पुरोडाश भी उसी देवता का होता है। ऐतरेय ब्राह्मण समस्त पशुओं को मेध्य (यज्ञ के योग्य) बता रहा है।, पशु की समृद्धि का कारण होने से पुरोडाशानुनिर्वपण की प्रशंसा की गई है। तुम्हारी दृष्टि से तो पुरोडाश निर्वाप भी निरर्थक ही है। होम (हवन) को तो तुमने वायुशुद्धि का कारण माना है, उससे देवता की तृप्ति को तो तुम मानते नहीं हो। सिद्धान्त तो यही है कि पशु की समृद्धि का कारण होने से पुरोडाशनिर्वाप करने के लिये कहा गया है। शास्त्रैकगम्य अर्थ में कुचोद्य का अवसर ही कहाँ होगा?। पुरोडाश से पशु छिद्रपूर्ति करना तो श्रुति ने ही बताया है। वस्तुतस्तु यह पुरोडाशनिर्वाप, पाशुक-कर्मप्रकरणगत होने से संस्कारार्थ है, स्वतन्त्र नहीं है।

'अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इस वचन की अनेक निबन्धकारों ने चर्चा की है, इसलिये उसे प्रमाण ही मानना चाहिये। और जो 'आयुर्वेदीय चरकसंहिता चिकित्सास्थान १९।४ में अतीसार रोग की उत्पत्ति प्रसंग



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यजता पशूनामभावात् गवालम्भः प्रवर्तितः ······अतिसारः पूर्वमुत्पन्नः पृषध्रयज्ञे' ( चरकसंहिताचिकित्सास्थान १९।४ )। एतेन विज्ञायते यदादिकाले यज्ञे पशवो न हिंस्यन्तेस्मेति' तदपि यत्किञ्चित्, अपौरुषेयमन्त्रब्राह्मणात्मकवेदविरुद्धस्यार्ष-वचनस्यपि तदानुगुण्येनैव व्याख्येयत्वात्। पूर्वोक्तरीत्या ब्राह्मणेषु ऋग्वेदसंहितायां प्रथममण्डले १६२तमसूक्ते च स्पष्टमेवाश्वादिपशूनामश्वमेधादावालम्भ उक्तः। ते मन्त्रास्तानि ब्राह्मणानि चेदनादीनि तदाऽवश्यं तदनुसारेण तत्सिद्ध्यति, सृष्ट्यारम्भे तत्प्रचारो न भवतीत्येव वक्तुं शक्यते। यथा वर्णाश्रमव्यवस्थाया वेदोक्तत्वादनादित्वेऽपि सृष्ट्यादौ स्वल्पप्रचारः, तथैव कृतयुगे प्रायेण सर्वेषां ब्रह्मविद्वरिष्ठत्वात् ब्रह्मनिष्ठाया एव प्राधान्यमासीत्। गवां तु सर्वथा अघ्न्यत्वात् तद्वधाभावः पूर्वमुक्त एव। अतीसारहेतुत्वादपि तद्वधो निषिद्धो वेदितव्यः।

एतेन 'पश्वालम्भनाभावे यज्ञपूर्तिःपुरोडाशेन' ( पृ० १५७ ) इत्यादिकमपि खण्डितं वेदितव्यम्, पश्वालम्भन-स्योत्सर्गस्य च शास्त्रैकसमधिगम्यत्वेन तदपलापासंभवात्। यत्रोत्सर्गविधानं तत्रोत्सर्गस्य यत्रालम्भनविधानं तत्रालम्भनस्यैव युक्तत्वात्। यदपि च—'पिष्टपशुभिरेव पाशुककर्मसम्पत्तिबोधनं तदपि वचनानुसारेणैवेति मन्तव्यम्। यत्र प्रतिनिधिविधानं स्यात्तत्रैवतस्य युक्तत्वात्। तत्रापि यः प्रथमकल्पे प्रभुर्नस्यात् तस्यैव कृतेऽनुकल्पस्यादरो नान्यस्य। तथा च मनुः—'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते। नसाम्परायिकं तस्य दुर्मतेर्विद्यते फलम्।' ( म० ११।३० ) इतिमनूक्तेः। यस्त्वितिहास-बलेन वैदिकपाशुकयज्ञविरोध उक्तः, तदपि नक्षोदक्षमम्। प्राचीनवैदिकवाङ्मयेतिहासाधारेण त्वदितिहासोऽशुद्ध इति किमु वक्तव्यम्। आधुनिकेतिहासदृष्ट्यापि त्वदितिहासस्य सर्वथाप्यशुद्धत्वात्। इदानीं यावत् सर्वैरास्तिकै-र्विद्वद्भिः मन्त्रब्राह्मणात्मकस्य वेदस्य नित्यत्वमपौरुषेयत्वञ्चाभ्युपेयते। यदि मन्त्राणां ब्राह्मणानाञ्चानादित्वं तदापश्वादि-यागस्य को ह्यमूढः सादित्वं वक्तुं प्रभवेत्। अन्यत्तु सर्वं पिष्टपेषणमेव। उपरिचरवसुसम्बन्ध्याख्यानस्य गवालम्भाभास-

में किये गये वर्णन से स्पष्ट है कि आदिकाल में यज्ञ में किसी भी पशु की हिंसा नहीं होती थी' इत्यादि पृ० १५३-५४ पर जो लिखा है, वह भी निःसार है। क्योंकि अपौरुषेय मन्त्र-ब्राह्मणात्मक वेद के विरुद्ध यदि कोई आर्षवचन आपाततः प्रतीत होता है तो उसकी व्याख्या वेद के अनुगुण हो करनी चाहिये। ब्राह्मण और चरकसंहिता के प्रथम मण्डल के १६२वें सूक्त में स्पष्ट बताया गया है कि 'अश्व-मेधादि में अश्वादि पशुओं का आलम्भ होता है।' वे मन्त्र ओर वे ब्राह्मण यदि अनादि, अपौरुषेय हैं, तो अवश्य ही तदनुसार उक्त कथन सिद्ध हो जाता है। हां, इतना ही कह सकते हैं कि सृष्टि के आरम्भ में उसका अधिक प्रचार नहीं रहा होगा। जैसे वर्णाश्रम-व्यवस्था वेदोक्त है, अनादि है, तथापि सृष्टि के आदिकाल में उसका प्रचार स्वल्प था, उसी तरह कृतयुग में प्रायः सभी ब्रह्मविद्वरिष्ठ थे, अतः ब्रह्मनिष्ठा की ही प्रधानता थी। गौ तो सर्वथा अघ्न्या (अवध्या) है, अतः उसके वध का अभाव पूर्व कह ही चुके हैं और अतीसार का हेतु होने से भी उसके वध को निषिद्ध समझ लेना चाहिये।

अतः पृ० १५७ पर जो कहा है कि 'पश्वालंभनके अभाव में यज्ञपूर्ति पुरोडाश से होती है।' उसका भी खण्डन हो जाता है। कहां पश्वालंभ करना चाहिये और कहां पशु का उत्सर्ग करना चाहिये, यह सब एकमात्र शास्त्रैकसमधिगम्य है, अतः उसका अपलाप करना संभव नहीं। जहां पर पिष्टपशु से ही पाशुककर्मानुष्ठान करना बताया गया है, वह वचन के अनुसार ही बताया गया है, इसे भूलना नहीं चाहिये। जहां प्रतिनिधि का विधान होगा, वहीं पर उसका औचित्य रहता है। उसमें भी जो व्यक्ति प्रथमकल्प का अनुष्ठान करने में समर्थ न हो, उसी के लिये अनुकल्प का आदर किया जाता है, अन्य के लिये नहीं। (मनु० ११।३०) ने भी इसी बात को कहा है। इतिहास का आश्रय लेकर वैदिकपाशुकयज्ञ का जो विरोध बताया है, वह भी ठीक नहीं है, क्योंकि प्राचीन वैदिक वाङ्मय के इतिहास को देखते हुए तुम्हारा इतिहास अशुद्ध है, यह सुनिश्चित है। तथा आधुनिक इतिहास की दृष्टि से भी तुम्हारा इतिहास सर्वथा अशुद्ध है। आजतक सम्पूर्ण आस्तिक विद्वान् लोग मन्त्र-ब्राह्मणात्मकवेद को नित्य और अपौरुषेय मानते चले आ रहे हैं। ऐसी स्थिति में कौन विचारशील व्यक्ति पश्वादियाग को सादि कहेगा। अन्य बातें तो सब पिष्टपेषण के ही तुल्य हैं। पूर्वोक्त आख्यान का और गवालम्भाभासवचन आदि का समाधान पूर्व कर ही चुके हैं। युधिष्ठिर यदि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वचनस्य च समाधानं पूर्वमेवोक्तम्। युधिष्ठिरः स्याद्वादमञ्जरीकारस्य जैनाचार्यस्य सम्मतिं मनुते चेत्, तदा तु तद्रीत्या तेन वेदाः परमेश्वरश्च त्याज्या भवेयुः। तद्रीत्या तदभ्युपगमस्य मौर्ख्यप्रयोजकत्वात्।

यत्तु—'पञ्चतन्त्रे एतेऽपि याज्ञिका यज्ञकर्मणि पशून् व्यापादयन्ति ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति। तत्र किलैतदुक्तम्। 'अजैर्यष्टव्यम्' अजाव्रीहयः सप्तवार्षिकाः कथ्यन्ते, न पुनः पशुविशेषः।' (पृ० १६८) इत्यादिकम्, तदपि निवृत्तिमार्गप्रशंसापरत्वेन नेतव्यम्, अश्वमेधादिविधानाविरोधात्। 'अशुद्धमितिचेन्न शब्दात्' इति ब्रह्मसूत्रस्य श्रीभाष्ये श्रीरामानुजाचार्येण पशुयागस्य समर्थितत्वाच्च।

यदपिच—लभलम्भ इतिस्वतन्त्रधातुद्वयकल्पनया यत्किञ्चित् प्रलपितं तदप्यसङ्गतम्, तथात्वेऽनेकेषां पाणिनिसूत्राणां नैरर्थक्यापातात्। तथाहि आङ्पूर्वकात् लभधातोर्भावे ल्युटि सति आलम्भनम्, आलभनमिति रूपद्वयं भवति। 'उपसर्गात् खल्घञोः' इति पाणिनिसूत्रे नुम्विधायकम्। तत्र 'लभेश्च' (पा० सू० ७।१।६४) इत्यनेनैव खल्घञोरपि नुमः सिद्धौ 'उपसर्गात् खलघञोः' इति सूत्रं नियामकं भविष्यति 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते' इतिसिद्धान्तात्। नियमश्चोभयथा भविष्यति। 'उपसर्गादेव लभेर्नुम्स्यात् खल्घञोः' इतिप्रथमः। तेन ईषत्प्रलम्भः, सुप्रलम्भः, उपालम्भ इतिप्रयोगाः सिध्यन्ति।, नियमात् नुमो व्यावृत्तिः 'ईषल्लभः, लाभः इत्यनयोर्भवति। अस्मिन् पक्षे आलम्भनमित्यत्र 'लभेश्च' (पा० सू० ७।१।६४) इत्यनेन नुम् स्यादेव।

द्वितीयो नियमः—'भावकर्मान्यतरार्थके अजादौ कृत्प्रत्यये परतः उपसर्गात्परस्य लभेर्नुम् स्यात् तर्हि खल्घञोरेव। अतश्च भावे ल्युटि आलभनमिति सिद्धयति।

'क्षय्यजय्यौशक्यार्थे' (पा० सू० ६।१।८१) इतिसूत्रमुद्दिश्य महाभाष्यकृता उभयथा नियमः प्रदर्शितः।

स्याद्वादमञ्जरीकार जैनाचार्य की सम्मति मानते हों तो उनके मतानुसार वेदों को और परमेश्वर को तुम्हें भी त्यागना होगा। क्योंकि उनके नियम के अनुसार विरुद्ध सिद्धान्त का स्वीकार करना तो मूर्खता ही कहलायेगी।

पृ० १६८ पर यह जो कहा है कि पञ्चतन्त्र में 'ये याज्ञिक भी यज्ञ कर्म में पशुओं को मारते हैं, वे मूर्ख वेदवचन के ठीक अर्थ को नहीं जानते। वेद में कहा है—'अजों से यज्ञ करना चाहिये'। अज सात वर्ष पुराने व्रीहि कहे जाते हैं, न कि पशुविशेष (बकरा)।' पञ्चतन्त्र के उस उल्लेख को निवृत्तिमार्ग की प्रशंसापरक समझना चाहिये। अन्यथा अश्वमेधादि के विधान से विरोध होगा। 'अशुद्धमिति चेन्न शब्दात्'—(ब्र० सू० ३।१।२५) सूत्र के श्रीभाष्य में श्रीरामानुजाचार्य ने पशुयाग का समर्थन किया है।

पृ० १३१ तथा १६९ पर जो लभ और लम्भ दो स्वतन्त्र धातुओं की कल्पना करके जो कुछ प्रलाप किया है, वह भी असंगत ही है। क्योंकि वैसा मानने पर पाणिनि के अनेक सूत्र निरर्थक हो जाएँगे। तथाहि आङ्पूर्वक लभ धातु से भाव अर्थ में ल्युट् करने पर 'आलम्भनम्, और आलभनम्' ऐसे दो रूप निष्पन्न होते हैं। 'उपसर्गात् खल्घञोः'—(पा०सू०७।१।६७) यह सूत्र नुम्-विधायक है। किन्तु 'लभेश्च' (पा० सू० ७।१।६४) सूत्र से ही नुम् हो सकने पर भी (७।१।६७) सूत्र नियामक हो जायगा, क्योंकि 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते' यह सिद्धान्त है। नियम उभयथा होगा। एक प्रकार तो यह होगा कि 'उपसर्गादेव-लभेर्नुम् स्यात् खल्घञोः'। इस नियम के अनुसार 'ईषत्प्रलम्भः', 'सुप्रलम्भः', उपालम्भः', ये प्रयोग सिद्ध होंगे। नियम होने से नुम् की जब व्यावृत्ति होगी तब 'ईषल्लभः', 'लाभः' इन प्रयोगों की सिद्धि होगी। इस पक्ष में 'आलम्भनम्' में 'लभेश्च' (पा० सू० ७।१।६४) से नुम् होगा ही।

नियम का दूसरा प्रकार यह होगा—'भावकर्मान्यतरार्थ के 'अजादौ कृत्प्रत्यये परतः' उपसर्गात् परस्य लभेर्नुम्स्यात् तर्हि खल्घञोरेव'। अतः भावेल्युट् करने पर 'आलभनम्' रूप सिद्ध होगा।

'क्षय्यजय्यौशक्यार्थे' (पा० सू० ६।१।८१) इस सूत्र को उद्देश्यकर महाभाष्यकार ने उभयथा नियम प्रदर्शित किया है

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

( १ ) 'शिज्योरेवेचः,' ( २ ) 'शक्यार्थे एव,' इतिच। एष प्रकारः प्रकाशित 'एचोऽयवायावः' ( पा० सू० ६।१।७८ ) इतिसूत्रेभाष्ये। नहि मया कश्चन नूतनः पन्थाः प्रदर्शितः। अस्यां पद्धतौ नहि किमपि वैमत्यम् 'आलम्भ्या गौः, 'आलम्भ्या वडवा' इतितु 'आङोयि' ( पा० सू० ७।१।६५ ) इत्यनेन सिद्धयत्येव। चरकसंहितायां प्रयुक्तः 'समालभनीयाः' इतिप्रयोगः साधुरेव द्वितीयनियमपक्षतः। 'अग्निष्टोम आलभ्यः' इतिकाशिकाप्रयोगोऽपि साधीयानेव। लब्धुं योग्यःशक्यो बालभ्यः। 'पोरदुपधात्' ( पा० सू० ३।१।९८) इतियत्प्रत्ययः पूर्वं कार्यः। पश्चात् आङुपसर्गेण सम्बन्धः। यथा प्रकृष्टोभावः-प्रभावः, इत्युक्तम् सिद्धान्तकौमुद्याम् 'श्रिणीभुवोऽनुपसर्गे, (पा० सू० ३।३।२४) इतिसूत्रे। अनेन हि सूत्रेण श्रि-णी-भू-धातुभ्योऽनुपसृष्टेभ्यो घञ् प्रत्ययो भवति। प्रभाव इति कथं सिद्धयति ? तदोच्यते—भवनंभावः इतिभावशब्दं प्रसाध्य प्रकृष्टो भाव इतियोजना कार्या। तथैवात्रापि लभ्यइति साधयित्वा आङुपसर्गो योज्यः।

यदि लभिधातुरन्यः कल्प्यते तदा 'लभेश्च' ( पा० सू० ७।१।६४ ) 'आङोयि' ( पा० सू० ७।१।६५ ) 'उपात्प्रशंसायाम्' ( पा० सू० ७।१।६६ ) 'उपसर्गात्खल्घञोः' ( पा० सू० ७।१।६७ ) इत्यादीनि सर्वाणि पाणिनीयसूत्राणि निष्फलानि प्रसज्येरन्। नुम्घटितानां प्रयोगाणां लभिधातुनैव सिद्धेः, अतः प्रकृत्यन्तरकल्पने भगवतः पाणिनेः तात्पर्यं नास्तीत्येव सिद्धान्तः। यदुक्तम्—भट्टपादस्यानीश्वरवादो न्यायमञ्जरीकारेणोद्धृतम्, तदप्यशुद्धम्, तादृशानीश्वरवादस्येश्वरवादिरपि प्रतिपादितत्वात्। न्यायमञ्जरीकारस्य वचनानित्विमानि, तथाहीश्वरसद्भावो न प्रत्यक्षप्रमाणकः, नह्यसावविज्ञाने सर्पादिरिवभासते।

नच मानसविज्ञानसंवेद्योऽयं सुखादिवत्। योगिनामप्यप्रसिद्धत्वान्नतप्रत्यक्षगोचरः। प्रत्यक्षप्रतिषेधेन तत्पूर्वकमनुमानमपाकृतम्। अविज्ञाते तस्मिन् व्याप्त्यनुपग्रहात्। नच सामान्यतो दृष्टम् लिङ्गमस्यास्ति किंचन। क्षित्यादीनां तु कार्यत्वमसिद्धं सुधियः प्रति। शैलादिसन्निवेशोऽपि नैव कर्त्रनुमापकः। कर्तृपूर्वककुम्भादिसन्निवेशविलक्षणः॥ दृष्टः कर्त्रविनाभावी सन्निवेशो हि यादृशः। तादृङ्नगादौ नास्तीति कार्यत्ववदसिद्धता॥ सिद्धत्वेऽपि नसिद्धत्वमनैकान्त्यात्तृणादिभिः। अकृष्टजातैः कर्त्तारमन्तरेणाप्तजन्मभिः॥ तेषामुत्पत्तिसमये प्रत्यक्षत्वं न लक्ष्यते। कर्त्तादृश्यत्वमप्येवमभावोऽनुपलब्धितः॥ नच क्षितिजलप्रायदृष्टहेत्वतिरेकिणः। कस्यापि कल्पनं तेषु युज्यतेऽतिप्रसङ्गतः॥ तेन कर्त्तुरभावेऽपि सन्निवेशादिदर्शनात्।

(१) 'शिज्योरेवेचः' (२) 'शक्यार्थे एव'। 'एचोऽयवायावः' ( पा० सू० ६।१।७८ ) इस सूत्र के भाष्य में इस प्रकार को प्रकाशित किया गया है। यह कोई नवीन मार्ग नहीं है और इस पद्धति में किसी की कोई विप्रतिपत्ति भी नहीं है। 'आलम्भ्या गौः, 'आलम्भ्या वडवा' ये रूप 'आङो यि' (पा० सू० ७।१।६५) सूत्र से सिद्ध होते ही हैं। चरक संहिता में प्रयुक्त 'समालभनीयाः यह प्रयोग भी द्वितीयनियमपक्ष के अनुसार साधु ही हैं। 'अग्निष्टोम आलभ्यः' यह काशिका प्रयोग भी साधु है ही। 'लब्धुं योग्यः शक्यो वा लभ्यः', यहाँ पर 'पोरदुपधात्' (पा० सू० ३।१।९८) सूत्र से 'यत्' प्रत्यय पहले कर लेना चाहिये। पश्चात् 'आङ्' उपसर्ग से सम्बन्ध करना चाहिये। जैसे 'प्रकृष्टो भावः प्रभावः' यह सिद्धान्तकौमुदी में 'श्रिणी भुवोऽनुपसर्गे' ( पा० सू० ३।३।२४ ) सूत्र पर बताया है। उक्त सूत्र से अनुपसृष्ट धातुओं से 'घञ्' प्रत्यय होता है। तब 'प्रभावः' कैसे सिद्ध होगा ? उत्तर यह है कि 'भवनं भावः' इस प्रकार 'भाव' शब्द पहले साध लिया जाय पश्चात् 'प्रकृष्टो भावः—प्रभावः किया जाय। उसी तरह यहाँ भी 'लभ्यः' बनाकर पश्चात् 'आङ्' उपसर्ग जोड़ना चाहिये।

यदि एक अन्य 'लभि' धातु की कल्पना की जाती है तो 'लभेश्च' (७।१।६४), 'आङोयि' (७।१।६५), 'उपात्प्रशंसायाम्' (७।१।६६), 'उपसर्गात्खल्घञोः' (७।१।६७) इत्यादि सभी सूत्र निरर्थक होने लगेंगे। नुम्घटितप्रयोगों की सिद्धि 'लभि' धातु से ही हो जाती है। अतः एक और अन्य प्रकृति की कल्पना करने में भगवान् पाणिनि का तात्पर्य-कदापि नहीं है, यही सिद्धान्त है।

पृ० ४७ पर जो कहा है कि 'जयन्त ने न्यायमञ्जरी में भट्टपाद कुमारिल के अनीश्वरवाद का सोद्धरण खण्डन किया है।' किन्तु यह भी अशुद्ध है। वैसे अनीश्वरवाद का प्रतिपादन तो अन्य ईश्वरवादियों ने भी किया है। न्यायमञ्जरीकार के वचनों को

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनैकान्तिकताहेतोर्विप्रत्वे पुरुषत्ववत् ॥ किञ्च व्याप्त्यनुसारेण कल्प्यमानः प्रसिद्ध्यति। कुलालतुल्यः कर्तेति स्याद्विशेषविरुद्धता ॥ व्यापारवानसर्वज्ञः शरीरी क्लेशसंकुलः। घटस्य यादृशः कर्त्ता तादृगेव भवेद्भवः ॥ विशेष-साध्यतायां तु साध्यहीनं निदर्शनम्। कर्तृसामान्यसिद्धौ तु विशेषावगतिः कुतः ॥ अशरीरस्य कर्तृत्वं दृश्यते नहि कस्यचित्। देहोप्युत्पत्तिमानस्य देहत्वाच्चैत्रदेहवत् ॥ स्वयं निजशरीरस्य निर्माणमितिसाहसम्। कत्रन्तरकृते तस्मिन्नीश्वरानन्त्य-मापतेत् ॥ व्यापारेण जगत्सृष्टिः कुतो युगशतैरपि ॥ तदिच्छां चानुवर्तन्ते न जडा परमाणवः। अवाप्तसर्वानन्दस्य रागादि-रहितात्मनः। जगदारभमाणस्य न विद्मः किं प्रयोजनम् ॥ सर्गात्पूर्वं हि निःशेषक्लेशसंस्पर्शवर्जिताः। नास्य मुक्ता इवात्मानो भवन्ति करुणास्पदम् ॥ करुणामृतसंसिक्तहृदयो वा जगत्सृजन्। कथं सृजति दुर्वारदुःखप्राग्भारदारुणम् ॥ किमीश्वरतयेश्वरो यदि न वर्त्तते स्वेच्छया। नहि प्रभवतां क्रिया विधिषुहेतुरन्विष्यते ॥ नच क्रीडापि निःशेषजनतातङ्ककारिणी। आयासबहुला चेयं कर्त्तुं युक्ता महात्मनः ॥ तस्मान्न जगतां नाथः ईश्वरः स्रष्टा संहर्त्ता भवति। नह्यस्य भ्रियमाणेषु पूर्यन्ते जन्तुकर्मसु। सकृत्समस्तत्रैलोक्यनिर्मूलनमनोरथाः ॥ कर्मोपरमपक्षे तु पुनः सृष्टिर्न युज्यते। न कर्मनिरपेक्षो हि सर्गवैचित्र्यसंभवः। उद्भवाभिभवौ तेषां स्यातां चेदीश्वरेच्छया। तर्हि सैवास्तु जगतां सर्गसंहारकारणम् ॥

इत्येवमादिरीत्या न्यायमञ्जरीकारो जयन्तभट्ट ईश्वरसिद्धौ पूर्वपक्षमुपस्थापितवान्। सच न केवलं भट्टपादोक्त एव। विधिविवेकन्यायकणिकादावपि तादृशस्य पक्षस्य प्रतिपादनात्। तथाच नेदं भट्टपादस्यैवोद्धरणम्।

नचेदृशः पक्ष ईश्वरवादिभिर्नोपस्थाप्यते शास्त्रयोनित्वाधिकरणे ईश्वरवादिभिरुत्तरमीमांसकैरपि परमेश्व-रस्य शास्त्रैकगम्यत्वसिद्धयेऽनुमानसिद्धेश्वरनिराकरणदर्शनात्। कल्पतरुकारादिभी रामानुजाचार्यादिभिश्चैवमेवानुमानसिद्धस्ये-श्वरस्य निराकरणं कृतम्। नच, तावतैव तेऽनीश्वरवादिनः, वेदैकगम्येश्वरस्य तैरभ्युपगमात्। अनुमानानि च युक्तिरूपतया असंभावनानिवृत्त्यर्थं तैरप्यभ्युपगतान्येव। असंभावितेचार्थे प्रमाणप्रवृत्तिः 'न तस्य हेतुभिस्त्राणमुत्पन्नेव यो हतः।' इतिन्यायात्। अतोलक्षणैर्युक्तिभिश्च संभावितेऽर्थेएव प्रमाणानि प्रवर्त्तन्ते। सर्वथाऽपि मीमांसकाः वैदिकाः वेदसिद्धमीश्वरं मन्यन्ते, तथापि कर्मणि शुद्धातिशयोत्पादनाय कचिद्देवता अपि शब्दरूपा एव तैरङ्गीकृताः। न च वेदान्ताश्च वेदोपनिषदाः। सृष्टिसंहारा-भावान्नतदर्थत्वेनेश्वरोऽपेक्षणीयः। फलञ्च कर्मभिरेव संपद्यते। परमेश्वरप्रतिपादकानि वचनान्यर्थवादरूपाण्येवेति वदन्तो दृश्यन्ते। कर्मनिष्ठायां बुद्धिशुद्धिवैराग्यादिक्रमेण भगवदाराधनादिक्रमेण च ब्रह्मात्मसाक्षात्कारः संभवत्येव। तत एवोक्तं श्रीभागवतादौ—

> नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः।
> विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥
> वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
> नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिः ॥ (श्री० भा० म० पु०)

मूल संस्कृत में दिया गया है।

न्यायमञ्जरीकार जयन्तभट्ट ने ईश्वरसिद्धि में अनेक वचनों को पूर्वपक्ष के रूप में उपस्थित किया है। उस पूर्वपक्ष में केवल भट्टपादोक्त वचनों को ही नहीं लिया है, अपितु विधिविवेक, न्यायकणिका आदि ग्रन्थों में जो उसी प्रकार कहा गया है। ईश्वरवादियों के द्वारा उस प्रकार का पक्ष नहीं उपस्थापित किया जाता, सो नहीं। शास्त्रयोनित्वाधिकरण में ईश्वरवादी उत्तरमीमांसकों के द्वारा भी परमेश्वर को शास्त्रैकगम्य सिद्ध करने के लिये अनुमानसिद्ध ईश्वर का निराकरण किया गया है। कल्पतरुकार आदिने, रामानुजाचार्य आदि ने भी इसी प्रकार अनुमान सिद्ध ईश्वर का निराकरण किया है। इतने करनेमात्र से उन्हें अनीश्वरवादी नहीं कहा जाता। वेदैकगम्य ईश्वर को वे मानते हैं। अनुमान भी युक्तिरूप होने से उन्हें असंभावना निवृत्त्यर्थं सभी लोग मानते ही हैं। असंभावित अर्थ में प्रमाण की प्रवृत्ति नहीं हुआ करती। एवं च लक्षणों से तथा युक्तियों से संभावित अर्थ में भी प्रमाणों की प्रवृत्ति हुआ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धर्मोऽधर्मश्च वेदैकलभ्यो वेदश्च मन्त्रब्राह्मणरूप एव। अग्निहोत्रादिरूपो यज्ञोऽपि ब्राह्मणोक्त एव। अतः पूर्वमृजवो यज्ञा आसन् पश्चाद्वाह्याडम्बरः प्रधानतो जात इत्येतत्सर्वमुन्मत्तप्रलपितमेव। अनसो यज्ञोपयोगिव्रीहियवादिग्रहणं कर्त्तव्यमिति सहेतूपपादितमेव। शतपथब्राह्मणेन तदप्रामाण्ये पौर्णमासेष्टिनिर्वाहार्थं द्वादशमुष्टि परिमितानामेव व्रीहीणां यवानां वा ग्रहणमपेक्षितमिति कथनमपि निर्मूलमेव स्यात्।

वितस्तिपरिमितैरप्यनोभिर्हविग्रहणपारम्पर्यमपि याजुषामनुरोधेनैव, तत्रानसस्तदवयवानाञ्चोल्लेखात्। तेनात्र मन्त्रार्थानुसरणमेव न बाह्याडम्बरोऽभिप्रेतः। यत्तु प्राचीना यज्ञाः सर्वथाऽवैदिकतत्त्वासंस्पृष्टा उत्तरकाले दर्शपूर्णमाससदृशेषु विशुद्धयज्ञेष्वप्यवैदिकतत्त्वसम्मिश्रणम्, इति तदप्यशुद्धम्, मन्त्रब्राह्मणयोर्वेदत्वस्यासकृदुक्तत्वेन मन्त्रब्राह्मणप्रतिपादितस्य कस्याप्यंशस्य क्वापि यज्ञे संमिश्रणाभावात्। भूमावा अनः। भूमाहि वा अनस्तस्माद्यदावहुभवत्यनो वाह्यमभूदित्याहुस्तस्माद्भूमानमेवैतदुपैति तस्मादनस एव गृह्णीयात्' (श० १।१।२६) यज्ञो वा अनः। यज्ञोहिवा-अनस्तस्मादनसएव यजूंषि सन्ति न कोष्ठस्य न कुम्भ्यैभस्त्रायैहस्मर्षयो गृहणन्ति तदृषीन् प्रतिभस्त्रायै यजूंष्यासुस्तान्येर्तर्हि प्राकृतानि यज्ञाद्यज्ञं निर्मिमा इति तस्मादनस एव गृह्णीयात्? (श० १।१।२७) इति श्रुतेः। यस्मादनस एव ग्रहणं तस्माद् ग्रहणमन्त्राः 'धूरसि' (वा० सं० १।८) 'अह्रुतमसि हविर्धानम्' (वा० सं० १।९) इत्यादयोऽनोऽवयवलिङ्गा दृश्यते।

करती है। सर्वथापि मीमांसक वैदिक हैं, अतः वे वेदसिद्ध ईश्वर को मानते हैं। तथापि कर्म में श्रद्धातिशय के उत्पादनार्थ क्वचित् देवताओं को भी शब्दरूप ही उन्होंने माना है। मीमांसा सिद्धान्त के अनुसार सृष्टि और संहार का अभ्युपगम न होने से उसके कर्तृत्व का भार ईश्वर पर थोपने की मीमांसकों को आवश्यकता ही नहीं हुई, इस कारण ईश्वर को चर्चा की उन्हें अपेक्षा ही नहीं थी। फलप्रदातृत्व का भी भार कर्म पर ही है, ईश्वर पर नहीं। अतः उसकी चर्चा का कोई अवसर ही नहीं था। इसी कारण ईश्वरप्रतिपादक वचनों को अर्थवादरूप ही माना गया है। जिनका तात्पर्य कर्म में ही रहने से कर्म की प्रधानता कर्म में श्रद्धोत्पादनार्थ सिद्ध हो पाती है। इस रीति से कर्मनिष्ठा होने पर बुद्धिशुद्धि, वैराग्यादि के क्रम से और भगवदाराधनादि के क्रम से अवश्य ही ब्रह्मात्मसाक्षात्कार संभव हो जाता है। इसी बात को श्रीमद्भागवत में भी बताया गया है।

धर्म और अधर्म दोनों एकमात्रवेद से ही जाने जाते हैं। और वेद तो मन्त्र-ब्राह्मणरूप ही हैं। अग्निहोत्रादिरूप यज्ञ भी ब्राह्मणोक्त ही हैं। अतः 'पूर्व समय में ऋजुयज्ञ थे, पश्चात् उन यज्ञों में बाह्याडम्बर की प्रधानता हो गई।' किन्तु यह कथन भी उन्मत्त प्रलपित के तुल्य ही है। 'अन्न से भरे शकट से यज्ञोपयोगी व्रीहि-यवादिका ग्रहण करे' इस बात का सहेतुक उपपादन किया जा चुका है। शतपथ के द्वारा उसका अप्रामाण्य प्रदर्शित करने पर पौर्णमासेष्टि के लिए १२ मुष्टि परिमित व्रीहि या यवों का ही ग्रहण स्वीकार किया गया है।' किन्तु यह कथन भी निर्मूल है।

वितस्तिपरिमित शकट से हविर्ग्रहण की परंपरा भी यजु के अनुरोध से ही है। उसी में शकट और उसके अवयवों का उल्लेख किया गया है। अतः मन्त्रार्थ का अनुसरणमात्र ही किया गया है, उसमें बाह्याडम्बर कथमपि अभिप्रेत नहीं है।

यह जो कहा है कि 'प्राचीन यज्ञ, अवैदिक तत्वों से सर्वथा असंस्पृष्ट रहे, किन्तु आगे चलकर उत्तरकाल में दर्शपूर्णमास सदृश विशुद्ध यज्ञों में भी अवैदिक तत्वों का सम्मिश्रण हुआ।' किन्तु वह भी अशुद्ध है। क्योंकि मन्त्र-ब्राह्मण दोनों में वेदत्व का होना बार बार बताया जा चुका है। मन्त्र-ब्राह्मण के अतिरिक्त अन्य किसी का कोई भी अंश किसी भी यज्ञ में संमिश्रित नहीं है।

यह जो कहा है कि 'अंगादङ्गात् संभवसि' इस मन्त्र से और 'अविशेषेण पुत्राणां दायः' इस मनुवचन से तथा यास्क ने भी पुत्रों और पुत्रियों में भेदभाव का अपनोदन किया है। किन्तु श्रौतयज्ञों में तो पुत्रियों के प्रति हीनभावना का ही प्रदर्शन किया है। जैसे—प्रयाजसंज्ञक यागों में 'एको मम, एका तस्य, योऽस्मान् द्वेष्टि, यंच वयं द्विष्मः'–(श० प० १।५।४।१२) । वह कामना (इच्छा) उत्तरोत्तर प्रयाजों में बढ़ती हुई दिखाई देती है। यहां अपने लिये पुत्रकामना और द्विष्ट या द्वेषी शत्रु के पुत्री (कन्या) को कामना की जाती है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्तु—'अङ्गादङ्गात् संभवति' इति मन्त्रेण 'अविशेषेण पुत्रीणां दायः' इति मनुवचनेनच यास्केन पुत्रेषु पुत्रीषुच भेदभावोऽपनोदितः। किन्तु श्रौतयज्ञेषु तु पुत्रीषु हीनभावनैव प्रदर्शिता। तद्यथा प्रयाजसंज्ञकेषु यागेषु 'एको मम-एका तस्य, योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' (शत० १।५।४।१२) इति। साच कामनोत्तरोत्तरप्रयाजेषु वर्धमाना दृश्यते। अत्र स्वस्य पुत्रकामनाद्विष्टस्य द्वेषिणो वा कृते पुत्रीकामना दृश्यते।

पञ्चमे प्रयाजे स्वस्य पञ्च पुत्राः कामिताः। शत्रोः कृते न तस्य किञ्चन इत्याशीः पठितेति, तदपि नास्तिक्यमूलकमेव शतपथस्य वेदत्वेनानतिशङ्कनीयत्वात्।

लोके पुत्रजन्मनि यादृशोल्लासो दृश्यते पुत्रीजन्मनि तादृशोल्लासादर्शनात्। स्त्रियोऽपि यथा पुत्रजन्मनि प्रहृष्यन्ति न तथा पुत्रीजन्मनि। अत एव 'दुहितरइत्येके' इत्यादिना तत्रैव यास्कः पक्षान्तरं प्रदर्शयति। तस्मात् पुमान् दायादस्त्र्यदायादेतिविज्ञायते। 'यदृच्छन्ति स्थालीं न दारुमयं तस्मात् पुमान् दायादोऽदायादा स्त्रीति विज्ञायते' (मैत्रा० सं० ४।६।४) इति ब्राह्मणोक्तेः। 'तस्मात् स्त्रियंजातां परास्यन्ति न पुमांसमिति च (मै० सं० ४।६।४)। अथ च स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति न दारुमयं परास्यन्ति दहनकर्मणो दारुमयेनैव जुह्वति तस्मात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति तस्मात् पुमानेव पैतृकस्येष्टे न दुहिता। नच 'अङ्गादङ्गात् संभवति हृदयादधिजायसे' इत्यस्य समाजिरीत्या मन्त्रत्वम्, निरुक्तेतु—'तदेतदृक्श्लोकाभ्यामभ्युक्त'मिति ऋक्त्वाभिधानम्, 'अदायादास्त्रीति तु ब्राह्मणम् प्रतिपक्षसंमतऋग्वेदे अङ्गादङ्गात्संभवसीतिमन्त्रस्यादर्शनात्। नचान्यास्वपि तत्संमतासु संहितासु तदुपलम्भः केवलं कौषीतकि आरण्यके तदुपलम्भः। यास्केन तु तादृशारण्यकवचनस्यैव ऋक्त्वमुक्तम्। तेन मन्त्राणामेव वेदत्वं न ब्राह्मणानामित्यप्यपास्तम्।

ननु तथापि परस्परविरुद्धब्राह्मणवचनानां कथं विरोधपरिहार इति चेन्न, अभ्रातृमतीवाद (नि० ३।४) मित्यपरमित्यनेन तत्रैव तत्समाधानस्योक्तत्वात्'।

तस्माद्यैवाभ्रातृका सैवपित्र्यंधनमर्हतिनेतरा सभ्रातृकेति। पुरुषेषु हि पिण्डदातृषु सत्सु न कन्याधनमर्हति। अभ्रातृकायास्तु पिण्डदानाधिकारात् दायेऽप्यधिकारः। पिण्डं दत्वा धनंहरेदिति सिद्धान्तात्।

'अभ्रातरइव योषास्तिष्ठन्तु हतवर्त्मन' इति नियमात्। अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय। अथर्ववेदीयाचेयमृक्। 'अमूर्यायन्तिजामयः सर्वा लोहितवाससः। अभ्रातर इव योषास्तिष्ठन्तु हतवर्त्मनः' (अ० स० १।१।७।१)। तत्र दुर्गाचार्यः प्रसवभागे वहनरोगिणी या स्त्री भवति तस्मात्तत्प्रतीकारकर्मणीयं विनियुज्यते। अमूर्यायन्ति स्रवन्ति नाड्यो रक्तमजस्रमविरतास्त्रिय इवातिलोहितवस्त्रा सर्वा एतास्तिष्ठन्तु उपरमन्तु हतलोहितवहनमार्गा अस्यमन्त्रस्य

पञ्चम प्रयाज में अपने लिये पांच पुत्र चाहे गये हैं, और शत्रु के लिये 'न तस्य किञ्चन' इस प्रकार आशीः (इच्छा) की गई है।' किन्तु यह सब नास्तिक्यमूलक है। शतपथ भी वेद होने से उसमें शंका के लिये अवकाश ही कहां है। लोक व्यवहार में भी पुत्रजन्म होने पर जैसा उल्लास अनुभव किया जाता है, वैसा उल्लास पुत्री (कन्या) के पैदा होने पर नहीं होता। स्त्रियाँ भी पुत्र के पैदा होने पर जैसी हर्षित होती हैं, वैसी पुत्री (कन्या) के पैदा होने पर नहीं। अतएव 'दुहितरमित्येके' कहकर यास्क ने दूसरा पक्ष प्रदर्शित किया है। तस्मात् पुमान् (पुत्र) दायाद है और स्त्री (कन्या) अदायादा (दायाद नहीं) है यह ज्ञात होता है। मैत्रायणीसंहिता और ब्राह्मण में भी इसी आशय को बताया गया है। 'हृदयादधिजायसे' इस समाजीलोग 'मन्त्र' कहते हैं। किन्तु निरुक्तकार उसे ऋक् कहते हैं। समाजियों के सम्मत ऋग्वेद में 'अङ्गादङ्गात्संभवसि' यह मन्त्र कहीं भी उपलब्ध नहीं है। और न ही उनकी अभिमत अन्य संहिताओं में उसकी उपलब्धि है। केवल कौषीतकि आरण्यक में उसे पाया गया है। यास्कने उस आरण्यकवचन को ही ऋक् शब्द से बताया है। इससे समाजियों का जो मन्तव्य है कि 'मन्त्र ही वेद हैं, ब्राह्मण वेद नहीं हैं', उसका अच्छी तरह खण्डन हो जाता है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गोमेधस्तु—गवामघ्न्यत्वाद् व्रीह्यादिमयेन गोदेहेनैव निर्वर्त्यते। कलियुगे तु व्रीह्यादिमयगोमेधोऽपि निषिद्धः। नरमेधेऽपि नरो न हन्यते किन्तूत्सृज्यते, शुनःशेपस्यान्ते मोक्षदर्शनात्। यदपि गृह्यसूत्रेषु शूलगवे उक्ष्णो वृषभस्य वाऽऽलम्भनं भवति, 'रुद्राय वलिः समर्प्यते' आश्वलायनगृह्यसूत्रे इति, तदपि तुच्छम्, अघ्न्यपदप्रयोगविरोधात्। तत्र तदङ्गानां स्पर्शपूर्वकं तदङ्गानां रुद्राय निर्मञ्छनमेव क्रियते। तस्याप्युत्सर्ग एवालम्भः। त्यागस्य मरणरूपत्वोक्तेः। तदङ्गानां स्पर्श एवात्राप्यालम्भनम्।

'पशुना रुद्रं यजेत' इत्यस्य पशुं रुद्राय ददातीत्येवार्थः। 'यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' (वार्त्तिक १।४।३२) यजतेश्च संगतिकरणमर्थः। तच्च देवस्य नाम्ना तद्दानमेव। यत्तु तदङ्गानामग्नय उपहारो दर्शितः, तत्रापि अग्निपदेन रुद्र एवेष्टः। 'तस्मै रुद्राय नमो अस्तु अग्नये' इति श्रुतेः। 'तस्मात्तस्यैतान्यङ्गानि रुद्राय' रुद्रनाम्ना दानमेव बलिः। रुद्रो वृषभध्वजः पशुपतिश्च। शूलगवे प्रयुक्तस्योक्ष्णोऽरण्ये उत्सर्गः। न ग्रामे तदानयनम्। अतः प्राचीनकालेऽपि गोमेधे न गवां हननं भवति स्म।

किञ्च 'मुग्धा देवा उत शुना अयजन्त उत गोभिरङ्गैः। पुरुषा अयजन्त' (अथर्व० वे० सं० ७।५।५) अत्र गोभिर्ये यजन्ति तेषां मूढत्वमुक्तम्। देवा इत्यनेन पिशाचरूपा एव देवाः विवक्षिताः 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः।' (अमरको० १।१।११) इत्यमरोक्तेः। वस्तुतस्त्वत्र पूर्वार्धे कर्मयज्ञनिन्दा, उत्तरार्धे च ज्ञानयज्ञप्रशंसा।

यत्रापि गोमेधो गोयागो वा दृश्यते तत्र सर्वत्र व्रीह्यादिनिर्मितेनैव गोपशुना यजनं मन्तव्यम्। 'अवध्यानां परमावधिर्गौः' इति प्रकृतमन्त्रभाष्ये सायणोक्तेः। उपवेदभूते चरके—आदिकाले खलु यज्ञेषु पशवः समालम्भनीयाः (प्राप्तव्या) बभूवुः। न आलम्भाय (वधाय) प्रक्रियन्ते स्म। ततो दक्षयज्ञे प्रत्यवरकाले मनोः पुत्राणां नाभागेक्ष्वाक्वादीनां क्रतुषु पशूनामभ्यनुज्ञानात् पशवः प्रोक्षणमवापुः। अत एव तत्प्रत्यवरकाले पृषध्रेण दीर्घसत्रेण यजमानेन पशूनामलाभात् गवामालंभः प्रवर्तितस्तेन ततः पूर्वं गवामालम्भो वर्जित एव। तं दृष्ट्वा प्रव्यथिता भूतगणा उपाकृतानां (हतानां) गवां गौरवात् असात्म्यात् उपहताग्नीनां उपहतमनसां अतीसारः पूर्वमुत्पन्नः पृषध्रयज्ञे (चिकित्सास्थान १९।३) तेनास्य वैयक्तिकत्वं क्वाचित्कत्वं रोगोत्पादकत्वं मनोघातकत्वमेव सिद्ध्यति। गोमेधादौ तु व्रीह्यादिमयेनैव यजनं भवति स्म। कलियुगे सोऽपि निषिद्धः।

अनुस्तरण्या अपि उत्सर्गो दानमेव वा भवति स्म। तद्यथा बौधायनीयपितृमेधसूत्रे उत्सृजेद् वा एनां ब्राह्मणाय वा दद्यात्, दत्ता त्वेव श्रेयसे भवति' (१।१०।२)। आश्वलायनगृह्यसूत्रे अनुस्तरणीम् (४।२।४) अत्र गार्ग्यनारायणवृत्तिः—'अत्रापि एके ग्रहणं सम्बद्ध्यते। तेन अनुस्तरणी अनित्या।' इति कात्यायनेनापि 'न वा अस्ति संदेहादिति……तस्मान्न भवति।' इत्युक्तम्, केषाञ्चिद्रीत्या अनुस्तरणी वर्करी। यत्तु—

'गवां द्वादशलक्षाणां ददौ नित्यं मुदान्वितः।
सुपक्वानि च मांसानि ब्राह्मणेभ्यश्च पार्वति॥
षट्कोटिं ब्राह्मणानाञ्च भोजयामास नित्यशः।'

उसी तरह अश्वमेधीय अश्व का शरीर वेदविहित विविधविधियों से मलरहित शुद्ध किया जाता है। अश्वमेध के विषय में जो अन्यान्य आक्षेप किये गये हैं, उन सबका समाधान पहले ही किया जा चुका है। 'नरमेध' में भी 'नर' का वध नहीं किया जाता, किन्तु उसका (नर का) उत्सर्ग (त्याग) किया जाता है। आश्वलायन गृह्यसूत्र का नाम लेकर जो कहा गया है कि 'शूलगव' में उक्षा या वृषभ का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकृतिखण्डे ५०।१३।१४ ब्रह्मवैवर्त्ते—

गोमेधं च चतुर्लक्षं विधिवन्महदद्भुतम् ।
ब्राह्मणानां त्रिकोटिञ्च भोजयामास नित्यशः ॥
पञ्चलक्ष गवां मांसैः सुपक्वै घृतसंस्कृतैः। ( २।५४।४८-४९ )

इति स्वायम्भुवमनोरातिथ्यसत्कारः ।

तथैव—पञ्चकोटि गवां मांसं सपूपं सान्नमेव च । एतेषाञ्च नदीराशीत् भुञ्जते ब्राह्मणा मुने ॥ २।६१।९९ । इति । चैत्रस्य राज्ञः कृत्यम् । 'यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च'। इति सीतारामायणे अयोध्या ५५।२० ।

रुक्मिणीविवाहे च—

गवां लक्षं छेदनञ्च हरिणानां द्विलक्षकम् ।
चतुर्लक्षं शशानाञ्च कूर्माणां च तथा कुरु ॥

इत्यादिभिश्च गोवधगोमांसभक्षणसमर्थनमपि यत्किञ्चित्, वेदे गवां वधनिषेधानुरोधेन पूर्वोक्तवचनानामन्यपरत्वनिर्णयात् ।

पुराणानां वेदोपबृंहणात्मकानां वेदानुगुणमेव तद्व्याख्यानस्य युक्तत्वात् । यथा वेदानां क्वचिद्यौगिकार्थाश्रयणे समाधानं तथैव पुराणवचनानामपि समाधानं युक्तमेव ।

यास्करीत्या सर्वाणिआख्यातजानि नामानि । न चेदं यास्कीयं मतं केवलं वेदार्थं किन्तु सार्वत्रिकमेव । अत एवामरकोषसुधाटीकाकृता भानुजीदीक्षितेनापि शाकटायनादिरीत्या लोकेऽपि नाम्नामाख्यातजत्वं मत्वा तथैव व्याख्यातम् । यास्कोऽप्याख्यातानुरूपां व्युत्पत्तिमभ्युपगच्छन्नपि परिव्राजक-तक्षन्-भूमिज-अश्व-तृणादिपदानां योगरूढितामभ्युपगतवान् । 'पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां 'नैकेषां' ( निरु० १।१४ ) व्युत्पत्तौ समानायामपि कश्चित्परिव्रजन्नपि न परिव्राजको भवति । तक्षन्नपि न सर्वः तक्षा भवति । अपरिव्रजन्नपि अतक्षन्नपि कश्चिदेव तक्षा भवति ।

यथा मांसभक्षणप्रपञ्चो दृश्यते वेदेऽपि तथैव दृश्यते ।

'एते वै प्रियाश्च अप्रियाश्च ऋत्विजः स्वर्गलोकं गमयन्ति' ( अथर्व वे० सं० ९।६।२३ ) अत्रातिथीनां स्वर्गदातृत्वमुक्तं ऋत्विक्त्वञ्च ब्राह्मणजातीयानामेव भवति नान्येषाम् । 'स्मृतेर्वा स्याद् ब्राह्मणानाम्' ( जै० सू० १२।४।३८ ) । 'ब्राह्मणानां वा इतरयोरार्त्विज्याभावात्' ( जै० सू० ६।६।१८ ) अत एव पाणिनिसूत्रमहाभाष्ये ऋत्विक्कर्म अर्हतीति आर्त्विजीनं ब्रह्मकुलम् । अत्र ब्राह्मणकुलस्य ऋत्विक्त्वं स्पष्टमेवोक्तम् ।

आलंभन होता है । किन्तु यह कथन भी तुच्छ है । क्योंकि 'अघ्न्य' पद के प्रयोग से विरोध होगा । उसमें तो उसके अंगों का स्पर्श कर रुद्र के लिये उसके अंगों का निर्मञ्छन ( न्यौछावर ) ही किया जाता है । उसका उत्सर्ग ( विसर्जन ) करना ही आलंभ है । क्योंकि त्याग को मरण के समान ही माना गया है । उसके अंगों का स्पर्श ही यहाँ आलंभन माना गया है । अतः प्राचीन काल में भी गोमेध में गौओं का हनन नहीं हुआ करता था । पुराणों का नाम लेकर मांस भक्षण, गोवध आदि बताना अत्यन्त अनुचित है, क्योंकि पुराणों को वेदोपबृंहक कहा गया है, अतः वेदों के अनुगुण ( अनुकूल ) ही उनकी व्याख्या करना समुचित होगा ।

यास्क ने व्याख्या करने की रीति जो बताई है, वह केवल वेद के लिये ही नहीं है, अपितु सर्वत्र इसका उपयोग किया जा सकता है । अतएव अमरकोष के सुधाटीकाकार भानुजीदीक्षित ने यास्क शाकटायनादि की रीति को अपनाकर व्याख्या की है । संज्ञाओं को आख्यातज मानते हुए भी अनेक संज्ञा विशेषों में योगरूढिता को भी आवश्यकता का ध्यान न रखकर बताया है । जैसे 'तक्षन्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके। अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥' ( मनु ३।९९ ) 'शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥ ( म० ३।१०० ) इत्यतिथि-सत्कारस्तपस्विनामपि विहितः। तदकरणे सुकृतक्षयश्चोक्तः। 'इष्टं च वा एष पूर्तञ्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति। एष वा अतिथिर्यत् श्रोत्रियः तस्मात् पूर्वो नाश्नीयात्' ( अथर्व ९।६।३१–९।६।६७ ) इति श्रोत्रियातिथेः पूर्वभोजनं निषिद्धम्। श्रोत्रियलक्षणञ्च—

जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।

विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥ ( अत्रिस्मृति १३८ ) इति स्मृतावुक्तम्।

'अशितवति अतिथौ अश्नीयात्' ( अथर्व वे० सं० ९।६।३८ ) अतिथिभोजनानन्तरमेव भोक्तव्यम्। 'एतद् वा उ स्वादीयो यद् अधिगवं क्षीरं वा मांसं वा तदेव अतिथेः पूर्वं नाश्नीयात्' ( अथर्व वे० सं० ९।६।३९ ) अत्रातिथेः पूर्वं दुग्धं मांसं वा न भक्षणीयमित्युक्तम्। अत्र च मांसमपि अतिथिभोजनानन्तरं न निषिद्धं यथा दुग्धं घृतं मधु उदकमतिथये दानत्वे-नोक्तं तथैव 'एवं विद्वान् ( तिथये ) मांसमुपसिच्य उपहरति' ( अथर्व वे० सं० ९।६।४३ ) अत्रातिथये मांसोपहारः स्पष्ट मेवोक्तः। 'अपूपवान् मांसवान् चरुरेह सीदतु' ( अ० वे० सं० १८।४।२० )।

'यं ते मन्थमयोदनं यन्मांसं यच्च लोहितम्। आमिक्षां दुदुता दात्रे सीरं सर्पिरथो मधु ॥' (अ० वे० सं० १०।९।१८) 'मांसमेकः पिंशति सूत्रपा' ( ऋ० सं० १।१६१।१० ) 'ये चार्वतो मांसभिक्षामुपासते' ( ऋ० सं० १।१६२।१२ ) 'यन्नीक्षणं मांस्पचन्या उखायाः' ( ऋ० सं० १।१६२।१३ ) इत्यादिमांसप्रतिपादकवैदिकवचनानां यादृशोऽर्थो भवति, तादृश एव वेदानुसारिपुराणानामप्यर्थो भवति। 'अतिथिग्वा' ( अथर्ववे० सं० २०।२१।८ ) इत्यत्र अतिथिग्वशब्दोऽपि वेदे समायाति। तत्र यथार्थस्तथैव पुराणेऽपि।

'यक्ष्ये त्वां गोसहस्रेण' इति सीतावचनस्यापि वेदानुसार्येवार्थः—'इमं मे गङ्गे यमुने' (ऋ० सं० १०।७५।५) इति वेदसिद्धगङ्गादेवतायाः स्तवनं यजनमुक्तम्। 'देवांश्च याभिर्यजते' ( ऋ० सं० ८।२८।३ ) अत्र यथा गोभिर्देवानां यजनमुक्तं तथैव रामायणेऽपि गोसहस्रेण गङ्गायजनमुपपद्यत एव। सीतावचनन्तु पूर्वोक्तवैदिकवचनस्य व्याख्यानमेव। सुराघटसहस्रेण इत्यत्रापि सुरापदेन सोमो विवक्षितो न मद्यम्। 'सोमो भूत्वा द्विजातीन् या ( सुरा ) भुङ्क्ते श्रेयोभिरुत्तमैः।' ( चरके चिकित्सास्थाने २४।५ ) 'सुरया सोमः' ( वा० सं० १९।५ ) तादृशसोमात्मकसुराघटसहस्रेण गङ्गायजनमपि नानुपपन्नम्।

तृण, परिव्राजक, पङ्कजादि शब्दों को—योगरूढ़ कहा जाता है। 'पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषाम्।' ( निरु० १।१४।३ ) जैसे तक्षणकर्म सभी के करने पर भी सभी को तक्षा नहीं कहा जाता, 'तृण्यते भक्ष्यत इति तृणम्' सभी भक्ष्यपदार्थों का भक्षण होने पर भी सभी भक्ष्य पदार्थ को तृण नहीं कहा जाता, परिव्रजन कर्म सभी के करने पर भी सभी को परिव्राजक नहीं कहा जाता। पङ्क में कितने ही पदार्थों के पैदा होने पर भी सभी को पंकज नहीं कहा जाता। प्रत्युत परिव्रजन, तक्षण, आदि कर्म न करने पर भी किसी व्यक्ति विशेष को ही परिव्राजक, तक्षा आदि कहा जाता है।

अथर्ववेद में अतिथियों का स्वर्गदातृत्व और ऋत्विक्त्व, ब्राह्मण जाति का ही होता है, बताया है। अतएव महाभाष्य में 'ऋत्विक् कर्म अर्हतीति आर्त्विजीनं ब्रह्मकुलम्' ब्राह्मणकुल का ऋत्विक्त्व स्पष्ट रूप से कहा है। मनु ने अतिथिसत्कार करना तपस्वियों के लिये भी बताया है, उसके न करने पर सुकृत का क्षय बताया है। श्रोत्रिय-अतिथि के पूर्व भोजन करने का निषेध किया है। अत्रि-स्मृति में श्रोत्रिय का लक्षण बताया गया है। मांसप्रतिपादक वैदिक वचनों का जैसा अर्थ है, ठीक वैसा ही वेदानुसारी पुराणों का भी अर्थ होता है। 'अतिथिग्व' शब्द भी वेद में आया है, वहाँ जो अर्थ है, वही पुराण में भी है।

'यक्ष्ये त्वां गोसहस्रेण' इस सीतावचन का भी वेदानुसारी ही अर्थ है। 'इमं मे गङ्गे यमुने' इससे वेद सिद्ध—गङ्गा देवता का स्तवन, यजन बताया गया है। 'देवांश्च याभिर्यजते' इस वचन में जैसे गौओं के द्वारा देवों का यजन बताया है, वैसे ही रामायण में भी गोसहस्र के द्वारा गङ्गा का यजन भी उपपन्न हो जाता है। सीतावचन भी पूर्वोक्त वैदिकवचन का व्याख्यान ही है।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

मांसशब्दात् 'अर्शआदिभ्योऽच्' (पा० सू०) प्रत्ययेन मांसमस्ति अनेन् इति मांसमिति व्युत्पत्त्या मांसोत्पादकदुग्धदधिघृतकूर्चादिकमपि ग्रहीतुं शक्यते, इत्यप्युक्तमेव। तदेव मांसैर्लातीति व्युत्पत्त्या मांसलं भवति। न तत्र जीवितपशुमांसं विवक्षितम्। खर्जूरबदरीफलाम्रकुमारिकादिसारभूतानि च मांसशब्दवाच्यानि भवन्तीत्यप्युक्तमेव।

'गोभिः श्रीणीत मत्सरम्' इत्यादिरीत्या गोपदेन क्वचित् क्षीरादिकं क्वचित् तान्तवी ज्या रज्जुः क्वचित् गोचर्मनिर्मितं पात्रं गृह्यते इत्यप्युक्तमेव। तद्रीत्या ब्रह्मवैवर्त्तेऽपि—'पञ्चकोटिगवां मांसैः' इत्यत्र तावतीनां गवां दुग्धादिकमेव मांसपदवाच्यमिष्टम्। गोपदेन क्षीरं गृह्यते तस्य सारो गोमांसमुच्यते।

ब्राह्मणानां त्रिकोटिं स भोजयामास नित्यशः।
पञ्चलक्ष गवां मांसैः सुपक्वैः घृतसंस्कृतैः॥

इत्यत्रापि घृतादिसंस्कृतदुग्धसारकूर्चादिनिर्मितापूपादिकं विवक्षितम्। गोधूमादिसारोऽपि मांसमुच्यते। 'गावः तण्डुलाः अन्नं गौः' इत्यादिरीत्या अन्नतण्डुलादयोऽपि गावो भवन्ति। तत्सारोऽपि मांसमुच्यते।

सर्वथाऽपि पुराणेषु न गोमांसादिभक्षणं न तेन सत्कारश्चोक्तः। यस्य गोवंशस्य रक्षणार्थं दिलीपः स्वदेहमामिषपिण्डवत्सिंहाय दत्तवान् "स न्यस्तशस्त्रो हरये स्वदेहमुपानयत् पिण्डमिवामिषस्य।" (रघुवंश २।५९)।

गवां पूजनार्थमेव श्रीकृष्णेन—इन्द्रमानभङ्गेन गोवर्धनपूजा चालिता। स्वयञ्च वृन्दावने श्रीकृष्णेन गोचारणं कृतम्। यद्रक्षणार्थं यस्य च पालनार्थमज्ञातवासस्थितेनाऽप्यर्जुनेन कौरवैर्विराटनगरे युद्धं कृतम्, तस्य पुराणप्रसिद्धस्य गोवधः कथं वेदे पुराणे वा समर्थयितुं शक्यते।

तस्माद्यथा 'गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्' इत्यादियोगवचनानां न प्रातीतिकोऽर्थः, तथैव वेदेषु पुराणेषु च गोमांसादिशब्दस्य पूर्वोक्तो गूढ एवार्थः। प्रस्थं कुमारिकामांसमित्यस्य प्रातीतिकमर्थं कश्चिदनभिज्ञ एव गृह्णाति, न विचारशीलः।

'परोक्षप्रिया इव हि देवाः' (गो० ब्रा०) इति रीत्या गूढ एवार्थः। -लोके उच्छिष्टशब्देन भुक्तशिष्टान्नादिकमिष्यते। वेदे तूच्छिष्टपदस्य परमात्मार्थो भवति।

उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः।
ऋचः सामानि छन्दांसि पुराणं यजुषा सह॥

व्रात्यपदेनाधमब्राह्मणादय उच्यन्ते, (अथर्ववे० संहितायाम् १५।३।१) इति वेदे तु परमात्मैव व्रात्यः। लोके वन्ध्या

'सुराघट-सहस्रेण' यहाँ भी सुरापद से सोम विवक्षित है, मद्य नहीं। यह बात चरक ने चिकित्सास्थान (२४।५) में स्पष्ट है। 'सुरया सोमः' (वा० सं० १९।५) के अनुशीलन से स्पष्ट हो जाता है कि सोमात्मक-सुराघटसहस्र से गङ्गायजन भी अनुपपन्न नहीं है। मांस—शब्द से अच् प्रत्यय जोड़ने पर 'मांसमस्ति अनेन इति मांसम्' इस व्युत्पत्ति से निष्पन्न मांस शब्द से दूध, दही, घृत, कूर्च आदि का भी ग्रहण किया जा सकता है। 'मांसं लाति' व्युत्पत्ति से वही मांसल होता है।

वहाँ जीवित पशुमांस विवक्षित नहीं है। खर्जूर, बदरीफल, आम्र, कुमारिकादिसारभूत पदार्थ, भी मांसशब्दवाच्य होते हैं। इसी प्रकार सब व्यवस्था लगा दी गई है। निष्कर्ष यही है कि पुराणों में कहीं पर भी गोमांसभक्षण अथवा उससे सत्कार करना नहीं बताया है। जिस गो वंश को रक्षा के लिये सम्राट् दिलीप ने सिंह के सामने आमिषपिण्ड के समान अपने शरीर को अर्पण कर दिया था उस गोवंश के वध की तथा उस मांसभक्षण की चर्चा करना भी अत्यन्त निन्दनीय है।

लोग वन्ध्यागौ को 'वशा कहते हैं, किन्तु वेद में 'सर्वोत्तम गौ' समझी जाती है। लोकव्यवहार में अपान शब्द से पायुवायु (पादना) कहा जाता है, किन्तु वेद में 'व्रात्यस्य-अपानम्' कहने से पौर्णमासी, अष्टका, अमावास्या, श्रद्धा, दीक्षा, दक्षिणा बताई गई है। लोक में वृषण को अण्डकोष कहते हैं, किन्तु वेद में 'अश्विनौ कामानां वर्धितारौ' अश्विनीकुमार समझे जाते हैं। प्रतिपक्षियों के द्वारा जिस ब्रह्मवैवर्त-पुराण में गोमांसभक्षण के वचनों को प्रदर्शित किया जा रहा है, उसी पुराण में गोवध करने पर प्रायश्चित्त बताया



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गोवंशा भवति, वेदे तु सर्वोत्तमा गौरुच्यते। लोके अपानशब्देन पायुवायुरुच्यते, परन्तु वेदे व्रात्यस्य अपानमिति पौर्णमासी अष्टका अमावास्या श्रद्धा दीक्षा दक्षिणा प्रोच्यते। लोके वृषणौ अण्डकोषः, वेदे अश्विनौ कामानां वर्धितारौ उच्येते।

यत्र ब्रह्मवैवर्त्ते गोमांसभक्षणस्य वचनानि प्रतिपक्षिभिः प्रदर्श्यन्ते, तत्रैव गोवधे प्रायश्चित्तमुक्तम्—

'कामतो गोवधे राजन् वर्षं तीर्थे भ्रमेन्नरः। यवयावकभोजी च करेण च जलं पिबेत्॥
तदा धेनुशतं दिव्यं ब्राह्मणेभ्यो सदक्षिणम्। दत्त्वा मुञ्चति पापाच्च भोजयित्वा द्विजं शतम्॥
प्रायश्चित्ते च क्षीणे च सर्वपापान्न भुञ्जति। पापावशेषाद्भवति दुःखी चण्डाल एव च॥, (२।५१।२५—२७)
गवां द्वादशलक्षाणां ददौ नित्यं मुदान्वितः। (२।५०।१३—१४)

इत्यत्र तु दानमेवोक्तं गवां न वधः। तत्रैव च—

पूपमन्नं च सूपान्नं सगव्यं मांसवर्जितम्।
विप्रा भोजनकाले च मनुवंशसमुद्भवम्॥ (ब्र० वै० २।५१।१६)

इति मांसवर्जितपूपादिभोजनमेवोक्तम्। 'अतो माषान्नमेवैतत् मांसार्थे ब्रह्मणा स्मृतम्।' (१५२ प्रजापतिस्मृतिः) पञ्चकोटिगवां मांसं सापूपं स्वन्नमेव च। ब्रह्मवैवर्त्ते 'अपूपवान् मांसवान् चरुर्देहः सीदतु' इत्यस्य व्याख्या तत एव चैत्रस्य राज्ञः—

शतनद्यो घृतानाञ्च दध्नो नद्यः शतानि च।
शतानि नद्यो दुग्धानां मधुनद्यश्च षोडश॥
मिष्टानां स्वस्तिकानाञ्च लक्षराशिश्च नित्यशः। (ब्र० वै० २।६१।९६-९८) इति।

न चैतत्सर्वं गवां हनने संभवति। पञ्चकोटिगोमांसभक्षणाय भोक्तारः कियन्तो भवेयुरित्यपि विचारणीयम्।

रुक्मिणीविवाहे तु तादृशप्रस्तावः रुक्मिण एव। स तु शिशुपालभक्तोऽसुरप्रकृतिक एवासीत्। अत एव श्रीकृष्णेन निगृहीत एव। भीष्मकस्तु कृष्णभक्त आसीत्। तत्र तु—

समागत्य सुरान् विद्वान् भूतांश्च प्रणनाम सः।
ददौ योग्याश्रमं तेभ्यो भक्ष्यपूर्णं सुधोपमम्॥
दिवानिशं चाप्युवाच दीयतां दीयतामिति। (श्रीकृष्णजन्मखण्ड—१०७।३३—३४)।

गया है। और वहीं पर गौओं का दान बताया गया है, वध नहीं। तथा वहीं पर मांसवर्जित-अपूपादि भोजन बताया गया गया है। क्या ये सब बातें गोवध होने पर संभव हो सकती हैं? पञ्चकोटिगोमांसभक्षणार्थ भोक्ता लोग कितने होंगे यह भी बुद्धि से सोचना चाहिये।

गौओं की पूजा के लिये ही श्रीकृष्ण ने इन्द्र का अभिमान भंगकर गोवर्धन की पूजा प्रचलित की। और वृन्दावन में स्वयं श्रीकृष्ण ने गोचारण किया। जिस गोवंश की रक्षा के लिये और पालन के लिये अज्ञातवास में रहते हुए भी अर्जुन ने विराट नगर में कौरवों के साथ युद्ध किया। पुराणप्रसिद्ध उस गोवंश के वध का वेद या पुराण में समर्थन कैसे हो सकता है। तस्मात् 'गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम्' इत्यादि योगवचनों का प्रातीतिक अर्थ जैसे नहीं लिया जाता, वैसे ही वेदों और पुराणों में गोमांसादिशब्द का पूर्वोक्त गूढ़ अर्थ ही है, और उसे ही लिया जाता है। 'प्रस्थं कुमारिकामांसम्' इसके प्रातीतिक अर्थ को कोई अनभिज्ञव्यक्ति ही स्वीकार कर सकता है, विचारशील व्यक्ति कभी नहीं उसे स्वीकार करेगा।

'परोक्षप्रिया इव हि देवाः' इस गोपथब्राह्मण वचन के अनुसार ये सब गूढ अर्थ ही हैं। लोकव्यवहार में 'उच्छिष्ट' शब्द से भुक्तशिष्ट अन्न समझा जाता है, किन्तु वेद में 'उच्छिष्ट' शब्द से 'परमात्मा' अर्थ समझा जाता है। 'व्रात्य' शब्द से अधम ब्राह्मण आदि समझे जाते हैं, किन्तु वेद में व्रात्य शब्द से परमात्मा ही समझा जाता है।

रुक्मिणी के विवाह में तो वैसा प्रस्ताव रुक्मी ने ही किया था। वह तो शिशुपाल का भक्त असुरप्रकृतिका ही था। अतएव श्रीकृष्ण के द्वारा वह निगृहीत किया गया था। भीष्म तो कृष्णभक्त थे।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आर्यसमाजिनां सत्यार्थप्रकाशेऽपि मांसादिभक्षणं दृश्यते । आधुनिकसमाजिभिस्तादृशांशानां प्रक्षिप्तत्व-मुच्यते । तत्र प्रथमसंस्करणे 'जो वन्ध्या गाय होती है, उसको भी गोमेध में मारना लिखा है—"स्थूलपृषतीमग्निवारुणी मनड्वाहीमालभेत" यह ब्राह्मण को श्रुति है । इसके स्त्रीलिङ्ग और स्थूलपृषती विशेषण से वन्ध्या गाय ली जाती है, क्योंकि वन्ध्या से दुग्ध और वत्सादिकों की उत्पत्ति नहीं होती । जो मांस खाय अथवा घृतादि से निर्वाह करे वे भी सब अग्निहोम किये विना न खायँ, क्योंकि जीव को मारने के समय पीड़ा होती है । उसमें कुछ पाप भी होता है । फिर जब अग्नि में होम करेंगे तो तब परमाणु से उस प्रकार सब जीवों को सुख पहुँचेगा । एक जीव की पीड़ा से पाप भया था सो भी थोड़ा सा गिना जायगा, अन्यथा नहीं ।' (सत्यार्थप्रकाश १० समुल्लास, पृ० ३०३ ) अत एवार्यसमाजे मांसपार्टी सञ्जाता ।

तथैव प्र० स० प्र० ४५ पृष्ठे—मांस के पिण्ड देने में कुछ पाप नहीं । पृ० १४९ यज्ञ के वास्ते जो पशुओं की हिंसा है, सो विधिपूर्वक हनन है । पृ० १७१ बहुत पशुओं वाला होम करके हुतशेष भोक्ता प्रशंसा को प्राप्त होता है । यजु० स्वा ७ भाष्य १९।२० । स० प्र० द्वितीयावृत्तावपि १० समुल्लासे मांसभक्षणं लिखितम् । मुंशीसमर्थदानमहाशयेन तन्निष्काशितमिति सनातनधर्मालोके षष्ठपुष्पे ।

यत्तु प्राचीनधर्मशास्त्रेषु गृह्यसूत्रेषु च गोचर्मणि सोमलताभिषव उक्तः, विवाहसमाप्तौ चानडुहे आर्षभ-रोहिते चर्मणि वधूमुपवेशयति ( सरिता ) इति तदपि तुच्छम्, स्वयंमृतचर्मणि सोमाभिषवस्यैव तत्रेष्टत्वात् । मृतपशु-चर्मपादत्राणमद्यापि हिन्दुभिर्धार्यत एव । गोपदस्य तु निरुक्तरीत्या पशुसामान्यमेवार्थः । 'अंशं दुहन्तो अध्यासते गवि इति अधिषवणचर्मणः' ( निरु० २।५।५ ) अत्र गोशब्दोऽधिषवणचर्मश्लेष्मस्नावाज्या-इषु-सूर्यसूर्यरश्मिप्रभृतीनां वाचकोऽभिप्रेतः । अद्यापि तैलादिरक्षणार्थं छागोष्ट्रादिचर्मकूपिका उपयुज्यन्त एव ।

स्वयं मृतार्षभचर्मणि वध्वा उपवेशनेऽपि न दोषः । वस्तुतस्तु—

अनड्वान् वृषभः प्रोक्तस्त्वनड्वान् मुख्य आलये । नारीयुक्प्रज्वलद्दीपमनडुत् कौतुकं गृहम् ॥

इति रन्तिकोषानुसारेण तत्रानडुत्शब्दो मुख्यालयस्य विवाहमण्डपस्य कौतुकागारस्य वाचकः । अनो वह-तीत्यनड्वत् पतिपत्नीरूपस्य रथस्य धारकत्वाद् मुख्यनिवासगृहमनड्वद् भवति । वाचस्पत्यकोषे तु—अनडुत् आसन्न-

आर्यसमाजियों के सत्यार्थप्रकाश में भी मांसादि का भक्षण बताया गया है । किन्तु आधुनिक समाजी उन जैसे अंशों को प्रक्षिप्त बताते हैं । उसके प्रथमसंस्करण ( सत्यार्थ प्रका० १० समु० पृ० ३०३ ) में दयानन्दीय मत को देखा जा सकता है । अतएव आर्यसमाज में मांसपार्टी हुई थी । तथैव प्र० स० स० प्रका० पृ० ४५ एवं पृ० १४९ यजु० स्वा० ७ भाष्य १९।२० भी देखिये । सत्यार्थ-प्रकाश की द्वितीय आवृत्ति में भी १० वें समुल्लास में मांस भक्षण लिखा गया है, किन्तु उसे मुन्शी समर्थदान महाशय ने निष्कासित कर दिया, यह बात सनातन धर्मालोक के षष्ठ पुष्प में बताई गई है ।

'सरिता' पत्रिका में जो लिखा गया है कि 'प्राचीन धर्मशास्त्रों में और गृह्यसूत्रों में गोचर्म पर सोमाभिषव करना बताया है, तथा विवाह समाप्ति पर बैल के, ऋषभ, रोहित के चर्म पर वधू को बैठाते हैं ।' किन्तु यह लिखना निःसार है, क्योंकि स्वयं मृत हुए के चर्म पर सोमाभिषव करना इष्ट है । मृत पशु के चर्म के बने हुए पादत्राण को आज भी हिन्दु लोग धारण करते ही हैं । उक्तरीति से गोपद का 'पशुसामान्य' ही अर्थ होता है । निरुक्त २।५।५ में जो गो शब्द आया है, उसके इषु, सूर्यरश्मि आदि अनेक अर्थ अभिप्रेत हैं । आज भी तैलादि की रक्षा के लिये छाग, उष्ट्र आदि के चर्म की बनी कुप्पी का उपयोग किया ही जाता है । स्वयं मृत हुए ऋषभ के चर्म पर वधू के बैठाने में भी कोई दोष नहीं है ।

वस्तुतस्तु रन्तिकोष के अनुसार 'अनडुत्' शब्द मुख्यालय, विवाहमण्डप, कौतुकागार का वाचक है । 'अनो वहतीत्य-नड्वत्'—पति-पत्नीरूप रथ का धारक होने से मुख्यनिवास गृह को 'अनड्वत्' कहते हैं । वाचस्पत्यकोष के अनुसार 'अनडुत्-आसन्न-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देशादौ इति लिखितम्, विवाहमण्डपासन्नदेशस्तु कौतुकागार एव। तथा चानडुहे मुख्यगृहे कौतुकागारे वा आर्षभे ऋषिभिः ऋषभतया श्रेष्ठतया स्वीकृते आर्षभे पुरुषर्षभ इत्यादिस्थलेषु ऋषभशब्दस्य श्रेष्ठार्थत्वदर्शनात्। यदि च ऋषभशब्दस्य वृषभार्थता स्यात्तदा आनडुहे इति पुनरुक्तिरेव स्यात्। रोहिते चर्मणि मृगचर्मणि वधूमुपवेशयतीत्येवार्थः। रौहिते इत्यस्य स्थाने रोहित इति वृद्धिरहितप्रयोगः संज्ञापूर्वकविधेरनित्यत्वात्। लोहिते इति पाठे तु सूर्यस्य प्रथमकिरणेनारुणे रक्तासने वधूमुपवेशयतीत्यर्थः।

कैश्चिद्विवाहपद्धतौ चर्मशब्दः शणवाचकोऽभिप्रेतः। वाचस्पत्यरीत्या तु शणपर एव चर्मपदार्थः। गोचर्मणि इति पाठे तु पारिभाषिकमेव तद् ग्राह्यम्। तद्यथा याज्ञवल्क्यस्मृतिमिताक्षरायाम्—

'दशहस्तेन दण्डेन त्रिंशद्दण्डनिवर्तनम्। दश तान्येव गोचर्म'। गृह्यासंग्रहेऽपि—

'ऋषभैकं शतं यत्र गवां तिष्ठति संवृतम्। बालवत्सप्रसूतानां गोचर्म इति संविदुः॥ १।३९॥

तथैव चन्द्रकान्तभाष्ये—

गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः। एतद् गोचर्ममात्रं तु प्राहुर्वेदविदो जनाः॥

तथा च गोचर्ममित्यनेन पृथिवीपरिमाणविशेष उक्तः पद्मचन्द्रकोषे १३६ पृ०। बृहस्पतिस्मृतौ च—

सवृषं गोसहस्रं तु यत्र तिष्ठत्यतन्द्रितम्। बालवत्सप्रसूतानां तद् गोचर्म इति स्मृतम्॥

एवं गोचर्मशब्देन स्थानविशेष एव गृह्यते। तथैव—'इह गावो निषीदन्तु इह अश्वा इह पूरुषाः'

(पारस्कर १।८।७)

नहि अपरिभाषितगोचर्मणि गवाश्वादीनामुपासनं भवति। तस्मात्पारिभाषिकमेव गोचर्मात्र ग्राह्यम्।

'दोग्ध्री धेनुर्वोढाऽनड्वान्' (वा० सं० २२।२२) इति यस्य गोवंशस्य महत्त्वमुक्तम्, मन्वादिभिर्यस्य वधे प्रायश्चित्तं विधीयते, तद्वधेन तच्चर्मण्युपवेशनं सर्वथाऽसंगतमेव।

उत्तररामचरिते 'वत्सतरी मडमडायिता' इत्यत्रापि न वध उक्तः, किन्तु विषादमुपगतेत्येवार्थः। यदि वशिष्ठः स्वसत्काराय मांसमपेक्षेत, तदा विश्वामित्राय स तथैव समांसं मधुपर्कं दद्यात्।

देशादौ' और विवाह मण्डपासन्न देश को 'कौतुकागार' ही कहते हैं। 'ऋषभ' शब्द का अर्थ 'श्रेष्ठ' भी है। यदि 'ऋषभ' का अर्थ यहाँ वृषभ किया जाय तो 'आनडुहे' कहने में पुनरुक्ति होगी। 'रोहिते—चर्मणि का अर्थ मृगचर्मणि। मृगचर्म पर वधू को बैठाना ही अर्थ है। संज्ञापूर्वक विधि के अनित्य होने से 'रौहिते' के स्थान में—'रोहिते' यह वृद्धिरहित प्रयोग है। 'लोहिते' पाठ में सूर्य की प्रथम किरण से अरुण प्रतीत होनेवाले आसन पर अर्थ होगा।

विवाह पद्धति के अनुसार कुछ लोगों ने 'चर्म' शब्द को 'शण' वाचक माना है। वाचस्पत्य के अनुसार तो 'शणपट ही चर्म पदार्थ है। गोचर्म शब्द से पारिभाषिक चर्म ही ग्रहण करना चाहिये, ऐसा मिताक्षरा, चन्द्रकान्तभाष्य, बृहस्पतिस्मृति, पारस्कर आदि ने कहा है। जिस गोवंश का महत्त्व वेद बता रहे हैं, जिसके वध होने पर मन्वादिकों ने प्रायश्चित का विधान किया है, ऐसी स्थिति में उसका वधकर उसके चर्म पर बैठाने की बात तो सर्वथा असंगत ही है। उत्तररामचरित्र में 'वत्सतरी मडमडायिता' से 'वध' नहीं बताया गया है, किन्तु 'विषादमुपगता' इतना ही अर्थ है। यदि वशिष्ठ अपने सत्कार के लिये मांस की अपेक्षा रखते होते तो वे विश्वामित्र के लिये समांस मधुपर्क किये होते। किन्तु वैसा उन्होंने नहीं किया, अपितु उन्होंने फलमूल आदि ही अर्पण किये। कल्पसूत्र में जहाँ 'महोक्षं निर्वपन्ति' आया है, वहाँ 'निर्वपन्ति' का अर्थ 'ददति' ही कर्तव्य है, 'घ्नन्ति' नहीं।

उत्तररामचरित्र में भी वत्सतरी का विरासन इष्ट नहीं है। इसी कारण तो सत्कारार्ह व्यक्तियों का व्याघ्र-वृकादि की उक्ति से उपहास प्रदर्शित किया गया है। अतिथिसत्कारार्थ गो दुग्ध का उपयोग रहने से वत्सतरी के लिये दुग्धावशेष न रहने के कारण वह वत्सतरी भूख से पीडित हुई, इस अर्थ में ही 'वत्सतरी मडमडायिता' कहकर उसका हंभारना बताया गया है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वागतं तव चेत्युक्त्वा वशिष्ठेन महात्मना। आसनं चास्य भगवान् वशिष्ठो व्यादिदेश ह ॥
उपविष्टाय च तदा विश्वामित्राय धीमते। यथान्यायं मुनिवरः फलमूलमुपाहरत् ॥
(रामा० १।५२।२-३)

न च तथा कृतवान्, फलमूलादिकमेव तु समर्पितवान्।

यत्र तत्र 'श्रोत्रियाय अभ्यागताय वत्सतरीं महोक्षं वा निर्वपन्ति गृहमेधिनः' इति कल्पसूत्रवचनमुद्धृतम्, तत्रापि निर्वपन्तीत्यस्य ददतीत्यर्थो भवति न घ्नन्तीत्यर्थः।

उत्तररामचरितस्यापि न वत्सतरीविशसनमिष्टम्। तत एव सत्करणीयस्य व्याघ्रवृकाद्युक्त्योपहासप्रदर्शनम्। तत्र गवां दुग्धस्यातिथिसत्कारार्थोपयोगेन वत्सतर्य्याः कृतेऽनवशेषात्। सा क्षुधया विषण्णा जाता तदर्थिका एव वत्सतरी मडमडायिता।

जनकस्तु क्षत्रियत्वाद्वानप्रस्थत्वाच्च दुग्धादिकं न गृहीतवानिति तदर्थं वत्सतरी विसर्जिता।

यद्यपि 'न त्वेव अमांसोऽर्घः स्यात्' (पारस्कर गृ० सू० १।४।२९) इति मधुपर्के मांससाहित्यं युक्तमिति तदपि न, तत्र समांसस्य मांसलत्वार्थत्वात्। मांसलत्वं तु दुग्धसारादौ विद्यमानत्वेनैव अदितेरखण्डनीयाया अघ्न्याया गोरातिथ्याय हननस्याप्राप्तत्वात्। 'माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः।.........मा गामनागामदितिं वधिष्ट।' (ऋ० वे० सं०) 'मम चामुष्य च पाप्मानं हनोमि' (पारस्कर गृ० सू० १।३।२७) इति तत्रैव गोरुद्राणां मातृत्वाद् वसूनां दुहितृत्वाद् आदित्यानां स्वसृत्वात्तन्महामहिमवर्णनाद् अनपराधित्वेन हननानिषेधदर्शनाच्च। तत्र तस्या वधस्याभीष्टत्वे यदि उत्सिसृक्षेत् इत्युत्सर्गो नोच्यते। न च गवामिवान्यपशूनामध्यत्वव्यपदेशो वेदे दृश्यते। तस्मात् शुद्धानां दधिमधुघृतानां संयोजनेन मांसलो मधुपर्को निर्मातव्यो न निःसारदध्यादिभिरिति समासत्वोक्तेस्तात्पर्यम्।

गौर्गौर्गौरित्यनेन तु दक्षिणार्थं गोरुल्लेखः। तत्रादरातिशयायावृत्तिः। उत्सृजत तृणान्यत्तु इति तस्यै घासादिसमर्पणमेवाभिप्रेतम्। किंच—

'यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव।
तम् आहरामि निर्ऋतेरुपस्थाद् अस्पार्षमेनं शतशारदाय॥' (अथर्व वे० सं० ३।११।२)

इत्यादिमन्त्रैर्विज्ञायते मृतकानामप्युज्जीवनसामर्थ्यमासीत् पूर्वं नाद्यत्वे तादृशो शक्तिर्दृश्यते। तत एवाश्वालम्भनादिकं कलियुगे निषिद्धम्।

अन्यच्च— स्वयं चैषामनडुहो युज्यन्ति च वहन्ति च।
स्वयमुस्राश्च दुह्यन्ते मनःसंकल्पसिद्धिभिः॥ (म० भा० १२।२६३।३१)

राजा जनक क्षत्रिय थे और वानप्रस्थ थे, इसलिये उन्होंने दुग्ध नहीं लिया, अतः उनके लिये वत्सतरी का विसर्जन बताया है। यद्यपि पारस्कर ने समांस मधुपर्क बताया है, तो वहाँ भी मांसलतार्थक ही मांस शब्द का प्रयोग है। दुग्धसारादि के विद्यमान रहने पर ही मांसलत्व हो सकता है। आतिथ्य के निमित्त अदिति, अघ्न्या आदि शब्दों से संबोधित की जाने वाली गो का हनन तो प्राप्त ही नहीं है। वहाँ पर उसका वध यदि अभीष्ट रहता तो 'उत्सिसृक्षेत्' कहकर उत्सर्ग न कहा होता। तस्मात् शुद्ध दधि, मधु, घृत का सम्मिश्रण कर मांसल मधुपर्क तैयार करना चाहिये, निःसार दधि आदि से नहीं, यह बात कही गई है। तीन बार 'गौः गौः गौः' उल्लेख दक्षिणा के लिये किया गया है। आदरातिशय प्रकाशित करने के लिये आवृत्ति की गई है। 'उत्सृजत, तृणानि अत्तु' इससे उसके लिये घास आदि का समर्पण करना ही वहाँ अभिप्रेत है। अथर्ववेद सं० ३।११।२ आदि मन्त्रों से ज्ञात होता है कि उस समय मृतों को जिलाने का सामर्थ्य भी था, आज वैसा सामर्थ्य किसी में नहीं दिखाई देता। यही कारण है कि कलियुग में गवालंभ अश्वालंभनादि का निषेध कर दिया गया है। किन्तु अपने को मीमांसक समझनेवाले युधिष्ठिर जी वेदाध्ययन में चातुर्वर्ण्य का अधिकार मान रहे हैं, जो मीमांसाशास्त्र के एकदम विरुद्ध है। इसे सविस्तर समझने के लिये मूल संस्कृत को पढ़ लेना चाहिये।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'यस्तथा भावितात्मा स्यात् स गां (पशुं) आलब्धुमर्हति ।' ( म० भा० १२।२६३।३२ ) इत्यादिनापि गवामालम्भो निषिद्धः, तादृशसामर्थ्याभावादधुनातनानां जनानाम् । अत एव 'महच्चकाराकुशलं वृषं गां वालभेत्तु यः' इति पूर्वोदाहृतं महाभारतवचनं न विस्मर्तव्यम् ।

किञ्च, कथमयं मीमांसकम्मन्यो पूर्वोत्तरमीमांसाविरुद्धं वेदाध्ययने चातुर्वर्ण्यमधिकृतं मन्यते ? तथाहि—'चातुर्वर्ण्यामविशेषात्' ( जै० सू० ६।१।२५ ) इति चातुर्वर्ण्यस्य वैदिककर्माधिकारमाशङ्क्य 'निर्देशाद्वा त्रयाणां स्यादाग्नेये' ( जै० सू० ६।१।२६ ) इति सूत्रेण 'वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः' इत्यादिविधिवाक्यैस्त्रयाणामेषामाधाने निर्देशादग्नेश्चतुर्थवर्णस्य नाधिकार इत्युक्तम् । पूर्वमीमांसायाम्—

'निमित्तेनार्थेन बादरिस्तस्मात् सर्वाधिकारः स्यात्' ( जै० सू० ६।१।२७ ) इत्यादिसूत्रैः 'य एवं विद्वानग्निमाधत्त' इति वाक्येन सर्वसाधारणे विहिते वसन्तादिवाक्यानि ब्राह्मणादिनिमित्तेन वसन्तादिकालविधायकानि, तेन शूद्रस्यानग्नित्वासिद्धया कर्मानधिकारो न सिद्धयतीति पूर्वोक्तां युक्तिं दूषयित्वा 'अपि वा वेदनिर्देशादपशूद्रः प्रतीयेत' ( जै० सू० ६।१।३३ ) इति सूत्रे वेदाध्ययनार्थोपनयने 'वसन्ते ब्राह्मणमुपनीयत' इत्यादिवाक्यैस्त्रयाणामेव निर्देशादुपनयनहीनश्चतुर्थोऽध्ययनाभावान्न कर्मस्वधिकारीति सिद्धान्तयुक्तिः प्रदर्शिता ।

'गुणार्थत्वान्नेति चेत्' ( जै० सू० ६।१।३४ ) इति सूत्रेण पुनः कर्मानुष्ठानार्थित्वादुपनयनाभावेऽपि स्वयमेव गत्वाध्येष्यत इति चोद्यमुद्भाव्य 'संस्कारस्य तदर्थत्वात्' ( जै० सू० ६।१।३५ ) इति सूत्रेणोपनयनसंस्कारस्याध्ययनार्थत्वादुपनयनाभावे स्वयमेव गत्वाध्ययनं विगुणं स्यादिति पूर्वोक्तचोद्यं परिहृत्य 'विद्यानिर्देशान्नेति चेत्' ( जै० सू० ६।१।३६ ) इति कर्मानुष्ठानार्थमवश्यग्राह्यया विद्ययाऽऽक्षेपाल्लौकिकाध्ययनं भविष्यतीत्युपनयनपूर्वकवैधाध्ययनाभावेन न किञ्चिद्वैगुण्यमित्याशङ्क्य 'अवैधत्वात्' ( जै० ६।१।३७ ) इति न शूद्रेणाध्येतव्यमित्यध्ययनमात्रनिषेधाद् विद्यारहितस्य न कर्मस्वधिकार इत्युक्त्वा 'तथा चान्यार्थदर्शनम्' ( जै० सू० ६।१।३८ ) इति सूत्रेण 'यद्यु ह वा एत्' इति श्रुतेः शूद्रसमीपेऽध्ययनप्रतिषेधात् । शूद्रस्य कथञ्चिदप्यध्ययनं न संभवतीति कैमुतिकन्यायेनावैधादिति सूत्रोक्तयुक्तिदृढीकरणम् ।

एवमेतेषु प्रमाणेषु सत्सु कथं दयानन्दतदीयानां वचनं तद्विरुद्धमादरणीयं स्यात् । उत्तरमीमांसायामपि अर्थित्वादिनाऽध्ययननियमस्य पुरुषार्थत्वेन लौकिकाध्ययनेन वैधत्वात् ।

'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' (६।४।२।३) इति विद्याधिकारिणि शूद्रशब्दप्रयोगाच्च ब्रह्मविद्यास्वधिकारमाशङ्क्य—'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि' ( ब्र० सू० १।३।३४ ) इति सूत्रेण शूद्रशब्दस्य शुचा दुद्रावेति यौगिकार्थत्वमुक्त्वा 'क्षत्रियत्वं गतेश्चेति' ( ब्र० सू० १।३।३५ ) सूत्रेण तस्य क्षत्रियत्वमुपपाद्य 'संस्कारपरामर्शात्तदभावाभिलापाच्च' ( ब्र० सू० १।३।३६ ) इति सूत्रेण 'त होपनिन्ये' (श० ब्रा० ११।५।३।१३) 'अधीहि भगव इति होपससाद' (छा० ७।१।१) इति विद्याप्रदेशेषु संस्कारपरामर्शात् ।

'शूद्रश्चतुर्थो वर्ण एकजातिः' ( १०।४ ) इत्येकजातित्वस्मरणात् 'न च संस्कारमर्हति' ( मनु० १०।१२–६ ) इत्यादिभिश्च संस्काराभावाभिलापाच्च शूद्रस्य न वेदाध्ययनाधिकार उक्तः । 'तदभावनिर्धारणे च प्रवृत्तेः' ( ब्र० सू० १।३।३७ ), 'श्रवणाध्ययनार्थं प्रतिषेधात् स्मृतेश्च' ( ब्र० सू० १।३।३८ ) इत्यादिभिरनधिकार उक्तः । तथात्वेऽपि समर्थनं समाजिनां साहसमेव ।

ऋषिप्रणीत ग्रन्थों की प्रमाणता की दुहाई देनेवाले आर्यसमाजी जैमिनि महर्षि के ही वचनों का अनादर कर ऋषियों का अपमान कर रहे हैं, और ऋषि वचनों के विरुद्ध प्रलाप करनेवाले दयानन्दीय वचनों को मान रहे हैं, कैसा आश्चर्य है ? मीमांसा सूत्रकार जैमिनि महर्षि, ब्रह्मसूत्रकार व्यास महर्षि, मनु आदि सभी ने चतुर्थवर्ण को वेदाध्ययन के अधिकार का स्पष्ट निषेध किया है । तथापि ये आर्यसमाजी उनके विरुद्ध समर्थन करने का प्रयत्न करते रहते हैं, इसे दुःसाहस ही कहा जायगा ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## यागेषु प्रकृतिविकृतिविचारः

शावरभाष्यभूमिकायाः पृष्ठे ९२ 'श्रौतयज्ञों का प्रकृति-विकृति भेद' इति शीर्षके लेखे लेखकेन यल्लिखितं तत्परिशीलयामः। प्रथमं तेन भेदत्रयं प्रदर्शितं, तदशुद्धम्। चत्वारोऽत्रभेदा वर्तन्ते—(१) केचनयागाः प्रकृतय एव। यथा दर्शपूर्णमासौ, अग्निष्टोमसंस्थाकज्योतिष्टोमश्च। (२) केचन विकृतय एव। यथा सौर्यादयः। (३) केचन प्रकृतयो विकृतयश्च। यथा-अग्नीषोमीयः पशुयागः, उक्थ्यषोडश्यतिरात्रसंस्थाका ज्योतिष्टोमयागाश्च। (४) केचन न प्रकृतयो भवन्ति, नापि विकृतयः। यथा दर्वी होमाः गृहमेधीयेष्टिश्च।

सर्वत्र लेखकोऽयं साङ्ख्यमतपोषकोऽपि प्रकृति-विकृतिविषये साङ्ख्यमतं नानुसरतीति विचित्रमिदम्। 'प्रकृतियाग का लक्षण' इत्यारभ्य प्रकृतेः त्रीणि लक्षणान्ययं लिखति। तत्र प्रथमलक्षणम्—'यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः' इति। एवं लक्षणं मीमांसकैःकदापि न क्रियेत, ते हि 'कलाप' शब्दं पुंल्लिङ्गे जानन्ति न क्लीबलिङ्गे। मीमांसकास्तु—'यत्र-समग्राङ्गोपदेशःसा प्रकृतिरि'ति कथयन्ति। अस्यैव लक्षणस्य परिष्कृतं रूपम्—यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितः तस्य पदार्थस्य तत्सम्वन्धित्वेन रूपेण तादृशोपकारद्वारैवान्याङ्गताबोधकं प्रमाणमतिदेशः। यः पदार्थः—प्रयाजानूयाजादिः, यादृशोपकारद्वारा—अदृष्टार्थानामदृष्टउपकारः, दृष्टार्थानाञ्च दृष्टउपकार इति रीत्या, यदङ्गत्वेनावधारितः—आग्नेयाङ्गत्वेनावधारितः, तस्य पदार्थस्य प्रयाजानूयाजादेः, तत्सम्बन्धित्वेन-आग्नेयादिसम्बन्धित्वेन रूपेण, तादृशोपकारद्वारा-दृष्टादृष्टोपकारद्वारा, अन्याङ्गताबोधकम्—सौर्याद्यङ्गताबोधकं 'प्रकृतिवद्विकृतिः कर्तव्या' इत्येवमादिकं वाक्यं प्रमाणम्। प्रयाजानूयाजादेराग्नेयसम्वन्धित्वं न स्वरूपेण, किन्त्वाग्नेयेतिकर्तव्यतात्वेन। अतश्चाग्नेयेतिकर्तव्यतात्वमेव विकृतिसम्बन्धितावच्छेकं सिध्यति। यथा प्रकृतौ प्रयाजानूयाजादय इतिकर्तव्यताकाङ्क्षापूरकत्वेन भावनायामन्वियन्ति, तथा विकृतिभावनायामपि

### यागों में प्रकृति-विकृतिविचार

शावरभाष्यभूमिका के पृष्ठ ९२ पर 'श्रौतयज्ञों का प्रकृति-विकृतिभेद' इस शीर्षक के लेख में लेखक ने जो लिखा है, उसी पर हम विचार करते हैं। पहली बात तो यह है कि उसने तीन भेद प्रदर्शित किये हैं, वही अशुद्ध है। श्रौत यज्ञों के चार भेद होते हैं (१) कुछ भाग तो केवल 'प्रकृति' ही होते हैं, जैसे—दर्शपूर्णमास और अग्निष्टोमसंस्थाकज्योतिष्टोम। (२) कुछ याग विकृति ही होते हैं, जैसे—सौर्यादियाग (३) कुछ याग प्रकृति-विकृति उभयात्मक होते हैं, जैसे—अग्नीषोमीयपशुयाग और उक्थ्य, षोडशी, अतिरात्रसंस्थाकज्योतिष्टोमयाग। (४) कुछ याग न प्रकृति और न विकृति ही होते हैं, जैसे—दर्वीहोम और गृहमेधीयेष्टि।

लेखक महोदय सर्वत्र सांख्यमत के पोषक दिखाई देते हैं, तथापि प्रकृति-विकृति के विषय में सांख्यमत का अनुसरण करते नहीं दिखाई देते, कैसे विचित्र हैं? 'प्रकृतियाग का लक्षण आरंभकर प्रकृति के तीन लक्षण ये लिख रहे हैं। उनमें प्रथम लक्षण—'जहां सम्पूर्ण क्रियाकलाप कहा गया हो उसे प्रकृति' कहा है। "यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः"। इस प्रकार का लक्षण मीमांसकों ने कहीं भी और कभी भी नहीं किया है। मीमांसक लोग तो 'कलाप' शब्द को पुंलिङ्ग में जानते हैं, नपुंसकलिङ्ग में नहीं। किन्तु युधिष्ठिरजी ने 'कलाप' शब्द को नपुंसकलिङ्ग में समझ रक्खा है। मीमांसकों ने 'यत्र समाम्नाङ्गोपदेशः सा प्रकृतिः' यह प्रकृति का लक्षण किया है। इसी लक्षण का परिष्कृतरूप यह होगा— 'जो पदार्थ, जिस प्रकार के उपकार के द्वारा जिसका अंग हुआ है, उसके सम्बन्धि के रूप में उसी प्रकार के उपकार के द्वारा उस पदार्थ में अन्यांगत्व बोधकप्रमाण को अतिदेश कहा गया है। तथाहि—जैसे प्रयाज-अनुयाजादि पर अदृष्ट उपकार और दृष्टार्थों पर दृष्ट उपकार के पदार्थ, अदृष्टार्थों द्वारा आग्नेयादि के अंगरूप में अवधारित हुआ है, अतः उस प्रयाजानूयाजादि पदार्थ में आग्नेयादि के सम्बन्धी के रूप से दृष्टाऽदृष्टोपकार द्वारा सौर्यादियाग-निरूपित अंगत्व का बोधक 'प्रकृतिवद् विकृतिः कर्तव्या'-प्रकृति के समान विकृति का अनुष्ठान करना चाहिये—यह वाक्य प्रमाण होता है। प्रयाजानूयाजादि का आग्नेयादि से सम्बन्धित होना स्वरूपतः नहीं है, किन्तु वे प्रयाजानूयाजादि पदार्थ आग्नेय की इतिकर्तव्यता के रूप में आग्नेय से सम्बन्धित होते हैं। अतः विकृतियाग के साथ होने वाली प्रयाजानूयाज की सम्बन्धिता का अवच्छेदक धर्म 'आग्नेयेतिकर्तव्यतात्व ही होगा यह स्पष्ट है। जैसे प्रकृति में भावना की इतिकर्तव्यताकांक्षा के पूरक बनकर प्रयाजानूयाजादि का भावना में अन्वय (सम्बन्ध) होता है, जैसे ही विकृति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्तदुपकारद्वाराऽन्वियन्तीत्यर्थः। अतश्च स्वेतिकर्तव्यताकाङ्क्षापूरकाणामङ्गानां समग्राणामाम्नानं सा प्रकृतिशब्देनोच्यत इति सिध्यति।

अन्यद्यल्लक्षणद्वयमिति प्रदर्शितं, तदज्ञानमूलकम्। आपदेवेन न्यायप्रकाशे वाक्यप्रमाणनिरूपणावसरेऽनारभ्याधीतानामङ्गानां क्व निवेशः—किं प्रकृतौ विकृतौ च? अथवा प्रकृतावेव? इति संशयमुत्थाप्य 'प्रकृतौवाऽद्विरुक्तत्वात्' इति जैमिनिसूत्रानुसारेण द्विरुक्तत्वरूपदोषनिवारणायानारभ्याधीतानां प्रकृतिगामित्वमेवेति स्वीकृत्य प्रकृतिस्वरूपनिश्चयाय 'अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्' इत्युक्त्वा अनारभ्याधीतानां गृहमेधीयेष्टौ प्राप्तिसिध्यर्थं 'चोदकाद्यत्र नाङ्गप्राप्तिः तत्कर्म प्रकृतिशब्देन विवक्षितम्' इत्युपसंहृतम्। गृहमेधीयेष्टेः प्रकृतिविकृतित्वाभावात् तत्रानारम्याधीताङ्गानां सन्निवेशाय ग्रन्थकारेणोपायस्सूचितः, न तु प्रकृतेर्लक्षणं कृतम्। अत एव प्रकरणविभागावसरे (पृ० ५३) तच्च (महाप्रकरणं) प्रयाजादीनां ग्राहकम्, तच्च प्रकृतावेव, यत्र समग्राङ्गोपदेशस्सा प्रकृतिः' इति प्रकृतेर्लक्षणमुक्तम्। इदञ्च लक्षणं सूत्रारूढम् कृत्स्नविधानाद्वाऽपूर्वत्वम्' (जै० सू० ८।१।५) इति सूत्रम् अग्निष्टोमस्यापूर्वत्वे—प्रकृतित्वे कृत्स्नविधानम् अभिषवादिसकलाङ्गविधानं हेतुरिति सूत्रकारो वदति। अतः 'यत्र समग्राङ्गोपदेशः सा प्रकृतिः' इत्येव प्रकृतेर्लक्षणम्।

लक्षणद्वयप्रदर्शनस्याज्ञानमूलकत्वेऽयं हेतुः—गृहमेधीयेष्टिश्चातुर्मास्येषु वरुणप्रघासपर्वणि 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति वाक्येन विहिता। तत्र 'आज्यभागौ यजति यज्ञतायै' इत्याम्नातम्। अत्राष्टौ पक्षाः सन्ति। तेषु सप्त पूर्वपक्षाः, अष्टमपक्षश्च सिद्धान्तः। ओदनद्रव्यकत्वादिदं कर्म 'इष्टिः' इत्युच्यते। इष्टीनां प्रकृतिः दर्शपूर्णमासौ।

भावना में भी तत्तदुपकार द्वारा वे (प्रयाजानूयाजादि) अन्वित होते हैं। अतः अपनी इतिकर्तव्यताकांक्षा के पूरक समग्र अङ्गों का अम्नान (पाठ) जहां हो, उसे 'प्रकृति' शब्द से कहा गया है।

और जो दो लक्षण (प्रकृतिके) प्रदर्शित किये हैं, वे अज्ञानवश ही किये गये प्रतीत हो रहे हैं। आपदेवने न्यायप्रकाश में वाक्यप्रमाणनिरूपणके अवसर पर अनारम्याधीत अंगों का निवेश कहां करना चाहिये? क्या प्रकृति और विकृतिदोनों में, अथवा प्रकृति में ही? इस प्रकार संशय जागरित कर 'प्रकृतौवाऽद्विरुक्तत्वात्' इस जैमिनि सूत्र के अनुसार द्विरुक्तत्व दोष के निवारणार्थ अनारम्याधीत अंगों का प्रकृतिगामित्व बताकर प्रकृति के स्वरूप का निश्चय करने के लिये 'अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिः' विकृति जहां से अंगों का ग्रहण करती है, वह प्रकृति शब्द से यहाँ विवक्षित नहीं है, यह कहकर अनारम्याधीतों की गृहमेधीयेष्टिमें प्राप्ति हो सके, एतदर्थ 'चोदकाद्यत्र नाङ्गप्राप्तिः तत्कर्म प्रकृतिशब्देन विवक्षितम्'-अतिदेश से जहां अंगों की प्राप्ति न हो उस कर्म को प्रकृति-शब्द से यहां विवक्षित किया गया है। इस प्रकार उपसंहार किया है। 'गृहमेधीयेष्टि' न किसी की प्रकृति है, और न किसी की विकृति है, अतः उसमें अनारम्याधीत अंगों के सन्निवेशार्थ ग्रन्थकार ने उपायमात्र सूचित किया है, वह कोई प्रकृति का लक्षण नहीं बताया है। अत एव प्रकरण विभाग करते समय (पृ. ५३) 'तत्र प्रयाजादीनां ग्राहकम्, तच्च प्रकृतावेव,'—वह महाप्रकरण प्रयाजादिकों का ग्राहक होता है, वह भी प्रकृति में ही होता है। प्रकृति किसे कहते है? तो बताया 'यत्र समग्राङ्गोपदेशः सा प्रकृतिः'—जहां समग्र (सम्पूर्ण) अंगों का उपदेश किया गया हो, वह प्रकृति है—इस प्रकार प्रकृति का लक्षण ग्रन्थकार ने बताया है और यह लक्षण सूत्रारूढ भी है। 'कृत्स्नविधानाद्वाऽपूर्वत्वम्' (जै० सू० ८।१।५) यह सूत्र अग्निष्टोम की अपूर्वता में तथा प्रकृतित्व को प्रदर्शित करने के लिये कृत्स्नविधान कर रहा है, अर्थात् अभिषवादि सकल अंगों का यहां विधान रहने के कारण अग्निष्टोम, एक अपूर्वकर्म है, वह प्रकृति रूप कर्म है। अतः अभिषवादिसकलाङ्गविधान (कृत्स्नविधान) ही अग्निष्टोम में अपूर्वता तथा प्रकृतित्व होने में हेतु है, यह सूत्रकार ने बताया है। इस कारण 'यत्र समग्रांगोपदेशः सा प्रकृतिः' यही प्रकृति का लक्षण है।

इसके अतिरिक्त दो लक्षणों को अज्ञानमूलक इसलिये कह रहे हैं कि 'चातुर्मास्ययाग'के वरुणप्रघास पर्व में 'गृहमेधीयेष्टि' का विधान किया गया है। वहां 'आज्यभागौ यजति यज्ञतायै' यह पढा गया है। यहां पर आठ पक्ष हैं। उनमें सातपक्ष पूर्वपक्ष के रूप में हैं, और आठवां पक्ष सिद्धान्तपक्ष है। ओदनद्रव्यक होनेसे इस कर्म को 'इष्टि' कहते हैं। इष्टियों की प्रकृति, 'दर्शपूर्णमासेष्टि' है। दर्शपूर्णमास में अग्नि सोमदेवताक दो आज्यभाग किये जाते हैं। दर्शपूर्णमास से ही इन दो यागों की प्राप्ति अतिदेश

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दर्शपूर्णमासयोः अग्निसोमदेवताकौ द्वौ आज्यभागयागौ स्तः। दर्शमासाभ्यामेवानयोर्यागयोरतिदेशेन प्राप्तौ सत्यामस्मिन् प्रकरणे समाम्नानमाज्यभागयोः कस्मै प्रयोजनायेत्याकाङ्क्षायामिमे पक्षाः तस्मिन्नधिकरणे प्रदर्शिताः (पू० मी० १०.७.९)। तेषु पञ्चमाष्टमपक्षौ परिसङ्ख्याविधिपरौ—अर्थात् प्रकृतितः विकृतेरितिकर्तव्यताकाङ्क्षापूरणाय प्राप्तानामङ्गानां बाधाय विकृतावस्मिन् 'आज्यभागौ यजति' इति श्रुतम्। गृहमेधीये आज्यभागातिरिक्तप्रयाजानूयाजादयो नानुष्ठेयाइत्येतदर्थमिदं वाक्यम्। अतिदेशेन प्राप्तेष्वङ्गेषु विधिरयं तदिताराङ्गपरिसङ्ख्यार्थत्वेन स्वसजातीयेतराङ्गानां यागरूपाणां प्रयाजानूयाजादीनां निवर्तक इति प्राप्तबाधोऽत्र पक्षे स्वीकृतः। एवं सति 'आज्यभागौ यजति' इत्यस्य प्रयाजादयो यागा न कर्तव्या इत्यर्थस्सम्पद्येत। तथा च स्वार्थहानिः परार्थस्वीकारः प्राप्तबाधश्चेति त्रैदोष्यं स्यात्। अतोऽष्टमः पक्षः। अस्मिन् पक्षे गृहमेधीयप्रकरणपठितम् 'आज्यभागौ यजति' इति वाक्यं प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशमेव निरुणद्धि। अतिदेशतः प्राप्तान् पदार्थान् न परिसङ्ख्ष्टे, किन्त्वप्राप्तानामेव प्रयाजादीनां पदार्थानां बाधकं भवतीत्यप्राप्तबाधः। अर्थात् स्वप्रकरणाधीतैरेव-आज्यभाग-स्विष्टकृदिडोपश्वेडाभक्षणादिभिरेवेष्टेरितिकर्तव्यताकाङ्क्षोपशमात् आज्यभागादिपठिताङ्गभिन्नप्रयाजादीनां परिसङ्ख्येत्यप्राप्तबाधः। अतः पञ्चमपरिसङ्ख्यापक्षे विकृतित्वं गृहमेधीयेष्टेस्सिध्यति, अतिदेशेन पदार्थानां प्राप्तत्वात्। अष्टमपक्षे च चोदकस्यैव परिलोपात् विकृतित्वशङ्काया अवसर एव नास्ति। आज्यभागाद्यतिरिक्तप्रयाजानूयाजादिसमग्राङ्गोपदेशाभावान्न प्रकृतित्वमपि। तर्ह्यनारभ्याधीतायाः पर्णताया निवेशः कथं गृहमेधीयेष्टौभवतु ? इतिशङ्कायास्समाधानाय 'चोदकाद्यत्र नाङ्गप्राप्तिः तत्कर्म प्रकृतिशब्देन विवक्षितम्' इत्युक्तम्। एवञ्च गृहमेधीयेष्टिः चोदकादङ्गानि न गृह्णाति, नापि च विकृत्यन्तरं गृहमेधीयेष्टितोऽङ्गानि गृह्णातीति गृहमेधीयेष्टिः न प्रकृतिः नापि विकृतिरिति सम्प्रदायः।

किञ्च लेखकोऽयं ९३ पृष्ठे 'प्रथम दो लक्षण प्राचीन मीमांसकों के हैं' इति विलिख्य तत्रो १ अङ्कं टिप्पण्यर्थं प्रदाय

से जब हो ही जाती है, तब इस प्रकरण में आज्यभाग का आम्नान (पाठ) किस प्रयोजन के लिये है ? यह आकांक्षा होनेपर इन पक्षों को उस अधिकरण में प्रदर्शित किया गया है (पू० मी० १०।७।९) उनमें से पांचवां और आठवां पक्ष परिसंख्याविधिपरक हैं, अर्थात् विकृति की इतिकर्तव्यताकांक्षा की पूर्ति करने के लिये प्रकृति से प्राप्तहुए अंगों के बाध का इस विकृतियाग में 'आज्यभागौ यजति' यह कहा गया है। अर्थात् गृहमेधीय में आज्यभागातिरिक्त प्रयाजानूयाजादिका अनुष्ठान न करने के लिये उक्त वाक्य को पढा गया है। अतिदेश से अंगों के प्राप्त होनेपर भी 'आज्यभागौ यजति' यह विधि स्वेतरांगों की परिसंख्या करने के लिये किया गया है, इस कारण वह स्वसजातीय (स्वसमान) प्रयाजानूयाजादि यागरूप इतरांगों का निवर्तक होता है, इसप्रकार इस पक्ष में इसे प्राप्तबाध कहाजाता है। तब 'आज्यभागौ यजति' का अर्थ 'प्रयाजादियागों का अनुष्ठान नहीं करना चाहिये' होगा। ऐसा अर्थ करनेपर स्वार्थहानि, परार्थस्वीकार, और प्राप्तबाध ये तीन दोष होंगे। अतः अष्टमपक्ष को स्वीकार किया गया है। इस पक्ष में गृहमेधीय प्रकरण में पठित 'आज्यभागौ यजति' वाक्य, 'प्रकृतिवद् विकृतिः कर्तव्या' इस अतिदेश को ही रोक देता है। अर्थात् अतिदेशतः प्राप्त हुए पदार्थों का वह परिसंख्यान (वर्जन) नहीं करता. बल्कि अप्राप्त प्रयाजादि पदार्थों का ही वह बाधक (निवर्तक) होता है, इस कारण यह 'अप्राप्तबाध' कहा जाता है। अर्थात् स्वप्रकरणाधीत आज्यभाग, स्विष्टकृत्,इडाभक्षणादिसे ही इष्टि की इतिकर्तव्यताकांक्षा का उपशम होजाने से आज्यभागादिपठितअंगों से भिन्न प्रयाजादि अंगों की परिसंख्या होने से यह अप्राप्तबाध है। अतः पञ्चम परिसंख्यापक्ष में गृहमेधीयेष्टि का विकृतित्व सिद्ध होता है। क्योंकि अतिदेश से पदार्थ प्राप्त हो जाते हैं। और अष्टमपक्ष में अतिदेशका ही लोप रहने से विकृतित्व की शंका के लिये अवसर ही नहीं है। आज्यभागादि के अतिरिक्त प्रयाजानूयाजादिसमग्रांगोपदेश का अभाव रहने से उसमें प्रकृतित्व नहीं है। अनारभ्याधीत पर्णताका निवेश गृहमेधीय इष्टि में कैसे हो पायगा ? इस शंका के समाधानार्थ 'चोदकाद् यत्र नाङ्गप्राप्तिः तत्कर्म प्रकृतिशब्देन विवक्षितम्'—अतिदेश से जहां अंगप्राप्ति नहीं होती, उसकर्म को 'प्रकृति' शब्द से विवक्षित किया गया है—ग्रन्थकार ने बताया है। एवञ्च गृहमेधीयेष्टि, चोदक (अतिदेश) से अंगों का ग्रहण नहीं करती और न अन्य कोई विकृति ही गृहमेधीयेष्टि से अंगों का ग्रहण करती है, इस कारण 'गृहमेधीयेष्टि' न प्रकृति है और न विकृति ही है, यही मीमांसकों का सिद्धान्त है।

किञ्च लेखक ने पृ० ९३ पर लिखा है कि 'प्रथम दो लक्षण प्राचीन मीमांसा के हैं' इतना लिखकर वहीं पर टिप्पणी लिखने के



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

टिप्पण्यां लिखति—'मीमांसासूत्रकार के विकृतौ प्राकृतस्य विधेर्दर्शनात् पुनः श्रुतिरनर्थिका स्यात् (१०.७.२४) अर्थात्, इत्यादि। इदं सर्वं लेखनमनन्वितम्। किं लिखामि, किं लेखनीयमित्यविज्ञायैव लिखति। जैमिनिः आज्यभागाधिकरणे (१०.७.९) प्रथमपक्षनिरूपणायेदं सूत्रं प्रणीतवान्। अस्मिन्नधिकरणेऽष्टौ पक्षा इति पूर्वमुक्तम्। तत्रायं प्रथमःपक्षः—गृहमेधीयेष्टिगतं 'आज्यभागौ यजति' इति वाक्यं चोदकतः प्राप्तेषु पदार्थेषु केवलमाज्यभागस्यानुवादमात्रं करोतीति।

सूत्रस्यायमर्थः—अष्टसु पक्षेष्वाज्यभागवाक्यं गृहमेधीयेष्टिगतमनुवादमात्रं करोतीति प्रथमः पक्षः। विकृतौ-विकृतिभूतायां गृहमेधीयेष्टौ, प्राकृतस्य विधेः—प्राकृताङ्गकलापस्य ग्रहणात्—अतिदेशत एव ग्रहणसम्भवात्, पुनः श्रुतिः—पुनस्तत्राज्यभागश्रुतिः अनर्थिका स्यात्—अप्राप्तप्रापणरूपप्रयोजनशून्या स्यात्। अनुवादमात्रं स्यादिति। अत्रैवं लिखति—'इस न्याय से गृहमेधीयेष्टि में यावदुक्त कर्मता मानी जाती है'। दूसरे शब्दों में यह विकृति याग है' आदि। 'यावदुक्त कर्मता मानी जाती है' इत्यस्य कोऽर्थः? यावदुक्तमङ्गजातं तदनुष्ठेयमिति तस्यार्थः। तमिममर्थं सूत्रकारोऽत्र सूत्रेण किं वदति? उपरिष्टाल्लिखति—'सूत्र कार के उक्त वचन से प्रथमलक्षणानुसार गृहमेधीयेष्टि प्रकृति कर्म के अन्तर्गत परिगृहीत होती है' इति। किमनेन सूत्रेण सूत्रकारो गृहमेधीयेष्टिं प्रकृत्यन्तर्गतां प्रतिपादयति? प्रथमलक्षणन्तु तव 'यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः' इति। (लेखकेन यथोक्तं लक्षणं तथैवात्र लिखितम्) किमनेन सूत्रेण प्रकृतेरेवं लक्षणं सूत्रकारः सूचयति? अहह! सर्वथा जैमिनिर्हतः।

तस्मिन्नेव ९३ पृष्ठे 'नवीन मीमांसकों ने द्वितीय लक्षण के·············तृतीय लक्षण बनाया है। यह (तृतीयलक्षण) न केवल क्लिष्ट है अपितु लक्षणपरिगृहीत प्रकृति-विकृति के अन्योन्याश्रय होने से अन्योन्याश्रित दोष दुष्ट भी है' इति। भोः लेखक! सावधानेन मनसा स्वीयं लेखं निरीक्षस्व। त्वदीयं तृतीयं लक्षणं 'चोदकाद्यत्र नाङ्गप्राप्तिः सा प्रकृतिः' इति। किमस्मिन् लक्षणे प्रकृति-विकृतिशब्दौ परिगृहीतौ? उपनेत्रं धारय, लक्षणञ्चावलोकय। अत्रान्योन्याश्रयदोषञ्चोद्भावयसि। न्यायप्रकाशसन्दर्भस्य स्थितिः पूर्वमेवाववोधिता।

लिये अंक (१) देकर लेखक ने टिप्पणी में लिखा है—"मीमांसासूत्रकार के 'विकृतौ प्राकृतस्य विधेर्दर्शनात् पुनः श्रुतिरनर्थिकास्यात्' (१०।७।२४) अर्थात्" इत्यादि। किन्तु यह सब लेख असम्बद्ध है। क्या लिख रहा हूँ, आगे क्या लिखना चाहिये? इसका बिना विचार किये ही लिखता जा रहा है। प्रथमतः इसे देखो, सोचो—जैमिनि ने आज्यभागाधिकरण (१०।७।९) में प्रथम पक्ष के निरूपणार्थ इस सूत्र की रचना की है। इस अधिकरण में आठ पक्ष प्रदर्शित किये गये हैं। उनमें प्रथम पक्ष—गृहमेधीयेष्टिगत 'आज्यभागौ यजति' यह वाक्य, अतिदेश के द्वारा पदार्थों के प्राप्त कराये जाने पर आज्यभाग का केवल अनुवादमात्र करता है। उपर्युक्त सूत्र का अर्थ यह है—विकृतौ-विकृतिभूत गृहमेधीयेष्टि में, 'प्राकृतस्यविधेः दर्शनात्'—प्राकृत अंगकलाप का अतिदेश से ही ग्रहण संभव होने से, पुनः श्रुतिः—वहां पर पुनः आज्यभाग का श्रवण, अनर्थिका स्यात्-अप्राप्तप्रापणरूपप्रयोजन से शून्य होगा 'अर्थात् केवल अनुवादमात्र होगा। किन्तु लेखक इस प्रकार लिखता है- 'इस न्याय से गृहमेधीयेष्टि में यावदुक्तकर्मता मानी जाती है। दूसरे शब्दों में यह विकृतियाग है' इत्यादि। 'यावदुक्तकर्मता मानी जाती है'- इस कथन का क्या अर्थ है? 'क्या यावत् अंगजात उक्त है, सबका अनुष्ठान करना' यह अर्थ है, क्या इसी अर्थ को यहां पर उक्तसूत्र से सूत्रकार कह रहे हैं? आगे चल कर लेखक महोदय पुनः लिखते हैं—'सूत्रकार के उक्तवचन से प्रथम लक्षणानुसार गृहमेधीयेष्टि प्रकृति कर्म के अन्तर्गत परिगृहीत होती है' इति। क्या इस सूत्र से सूत्रकार ने गृहमेधीयेष्टि को प्रकृति के अन्तर्गत बताया है? लेखक महोदय का लिखा हुआ प्रथम लक्षण तो यह है—'यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः' इति। क्या सूत्रकार ने प्रकृति का लक्षण इस सूत्र से इस प्रकार सूचित किया है? अरे तुमने तो सूत्रकार जैमिनि की हत्या ही कर डाली।

उसी ९३ पृष्ट पर लेखक ने पुनः लिखा है- 'नवीन मीमांसकों ने द्वितीय लक्षण के·············तृतीय लक्षण बनाया है। यह (तृतीय लक्षण) न केवल क्लिष्ट है, अपितु लक्षणपरिगृहीत प्रकृति-विकृति के अन्योन्याश्रय होने से अन्योन्याश्रयदोष दुष्ट भी है' इति। लेखक महोदय अपने लेख को किञ्चित् सावधानी से देखते तो अच्छा रहता। तुम्हारा तृतीय लक्षण 'चोदकाद् यत्र नाङ्गप्राप्तिः सा प्रकृतिः' इति। क्या इस लक्षण में प्रकृति-विकृति शब्दों का परिग्रह किया गया है? जरा आँखों से लक्षण का देखो, यहां पर अन्योन्याश्रय दोष की उद्भावना कर रहे हो। न्यायप्रकाशसन्दर्भ को हम पहले ही बता चुके हैं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्मिन्नेव ९३ पृष्ठे 'विकृति याग का लक्षण' इत्यारभ्य लक्षणं प्रदर्श्योदाहरति—'यथा दाक्षायणेष्टि, मित्रविन्देष्टि' इति। किमहं ब्रवीमि लेखकस्य बुद्धिप्रकर्षम्! द्वितीयतृतीयपादस्य चतुर्थमधिकरणं 'दाक्षायणयज्ञाधिकरणम्' इति व्यवह्रियते। तत्र शबरस्वामी भाष्यकारो लिखति—'तस्मात् प्रकृतयोर्दर्शपूर्णमासयोर्गुणात् फलमुच्यते, न यागान्तरं विधीयते' इति (शा० भा० पृ० १२४ चौ० सं०)। लेखकमहाभागो यज्ञशब्दस्य यत्र प्रयोगः कर्तव्यस्तत्र तं न करोति, यत्र च न कर्तव्यस्तत्र तं प्रयुङ्क्ते। यथा—'दाक्षायणेष्टिः' इति 'सृष्टियज्ञः' इति। अस्य क्रतोः दाक्षायणेष्टिरिति न व्यवहारो मीमांसकयाज्ञिकेषु, किन्तु दाक्षायणयज्ञ इत्येव व्यवहारः। तपस्वी अयं व्यवहारमिमं कथं जानातु? शाबरभाष्यस्यानुवादं परं कर्तुं प्रवृत्तः, किन्तु दाक्षायणयज्ञं विकृतिं लिखति। अत्रायं विषयविवेकः—द्वितीयाध्यायो मीमांसायां कर्मभेदाध्याय इत्युच्यते। तत्र कर्मभेदं प्रति षट्प्रमाणानि स्वीकृतानि। द्वितीय-द्वितीयपादे पञ्चानां प्रमाणानां विचारो जातः—शब्दान्तरम्, अभ्यासः, सङ्ख्या, संज्ञा, गुण इति। तृतीयपादे संज्ञया कर्मभेदस्यापवादो विचार्यते। तत्रेदमुदाहरणम्—'दाक्षायणयज्ञेन स्वर्गकामो यजेत' 'साकम्प्रस्थायीयेन यजेत पशुकामः' इत्यादि। अत्र किं कर्मान्तरविधिः? अथवा गुणफलविधिः? इति सन्देहः। दर्शपूर्णमाससंज्ञापेक्षया दाक्षायणयज्ञ इति संज्ञान्तरमस्ति। अतः ज्योतिः विश्वज्योतिः सर्वज्योतिरित्यत्र यथा संज्ञया कर्मभेद उपपादितः, तथैवात्र दाक्षायणयज्ञ इति संज्ञाभेदात् कर्मान्तरमिति पूर्वपक्षः। सिद्धान्तस्तु गुणफलविधिः। यत्रा 'दध्नेन्द्रियकामस्य जुहुयात्' गुणफलविधिः, न कर्मान्तरम्, तथा प्रकृतदर्शपूर्णमासयोरेवैतादृशगुणयुक्तयोरनुष्ठाने फलमिदं भविष्यतीति नेदं कर्मान्तरम्। कोऽयं दाक्षायणयज्ञबोधितो गुण इति चेत्, तत्रेदं वाक्यमाम्नायते—'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयज्ञी स्यात् पञ्चदश वा वर्षाणि यजेत तर्ह्येवं सम्पद्येत' इति। त्रिंशतं वर्षाणि दर्शपूर्णमासयाजिनो यावती दर्शपूर्णमासप्रयोगसंख्या तावत्सङ्ख्याकदर्शपूर्णमासप्रयोगसम्पत्तिं पञ्चदशवार्षिकदाक्षायणयज्ञिनो दर्शयति। तत्रायं वाक्यशेषः—'द्वे पौर्णमास्यौ

उसी ९३ पृष्ठ पर 'विकृति याग का लक्षण' ऐसा आरंभ करके लक्षण प्रदर्शित करते हुए लेखक ने उदाहरण दिया है—'यथा दाक्षायणेष्टि, मित्रविन्देष्टि' इति। लेखक की बुद्धि को क्या हो गया है? द्वितीय के तृतीय पाद का चतुर्थ अधिकरण 'दाक्षायणयज्ञाधिकरण' है। वहाँ भाष्यकार शबरस्वामी लिखते हैं—'तस्मात् प्रकृतयोर्दर्शपूर्णमासयोर्गुणात् फलमुच्यते, न यागान्तरं विधीयते' इति (शा. भा. पृ. १२४ चौ. सं.)। लेखक महोदय यज्ञ शब्द का जहाँ प्रयोग करना चाहिये, वहाँ तो उसका प्रयोग नहीं करते, किन्तु जहां नहीं करना चाहिये वहां उसका प्रयोग अवश्य करते दिखाई पड़ते हैं। जैसे—'दाक्षायणेष्टिः' इति 'सृष्टियज्ञः' इति। मीमांसकयाज्ञिकों में इस क्रतु का दाक्षायणेष्टि शब्द से व्यवहार कहीं भी नहीं किया जाता, अपितु 'दाक्षायणयज्ञ' शब्द से ही व्यवहार होता पाया जाता है। यह तपस्वी लेखक मीमांसासम्प्रदायप्रसिद्ध व्यवहार को क्याजाने? शाबरभाष्य का अनुवाद करने प्रवृत्त हुए हैं, और दाक्षायणयज्ञ को विकृति लिखरहे हैं। यहाँपर विषयविवेक इसप्रकार है—मीमांसा में द्वितीयाध्याय को कर्मभेदाध्याय कहते हैं। उसमें कर्मभेद बताने वाले ये प्रमाण कहे हैं। द्वितीयाध्याय के द्वितीयपाद में पांच प्रमाणों का विचार कियागया है—(१) शब्दान्तर, (२) अभ्यास, (३) संख्या, (४) संज्ञा, (५) गुण—ये पाँच कर्मभेदक प्रमाण है। तृतीयपाद में संज्ञासे होने वाले कर्मभेद के अपवाद का विचार किया गया है। वहाँ यह उदाहरण—'दाक्षायणयज्ञेन स्वर्गकामो यजेत पशुकामः' देकर विचार किया है कि यहाँ पर कर्मान्तर का विधान है, या गुणफल का विधान है? इस पर पूर्वपक्षी ने कहा कि 'दर्शपूर्णमास' इस संज्ञा की अपेक्षया 'दाक्षायणयज्ञ' यह संज्ञान्तर है। अतः 'ज्योतिः विश्वज्योतिः सर्वज्योतिः' यहाँ पर जैसे संज्ञा से भिन्न होने से कर्मभेद का उपपादन किया जाता है, वैसे ही यहाँ पर भी 'दाक्षायणयज्ञ' यह संज्ञा, 'दर्शपूर्णमास' इस संज्ञा से भिन्न होने के कारण इसे कर्मान्तर ही कहना चाहिए। यह पूर्वपक्ष हुआ। उस पर सिद्धान्ती ने कहा कि उक्त यज्ञ को कर्मान्तर कहना उचित नहीं, वह तो 'गुणफलविधि' है। जैसे 'दध्नेन्द्रियकामस्य जुहुयात्' में गुणफलविधि माना गया है, उसे कर्मान्तरविधि नहीं कहा, वैसे ही एतादृशगुण-विशिष्ट प्रकृति दर्शपूर्णमास के ही अनुष्ठान से यह फल सम्पन्न हो जायगा, अतः उस दाक्षायणयज्ञ को कर्मान्तर कहना उचित नहीं है, यह सिद्धान्त किया गया। दाक्षायणयज्ञ से बोधित किया जाने वाला गुण कौन सा है? ऐसी जिज्ञासा होने पर, वहाँ यह वाक्य पढ़ा गया है—'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयज्ञी स्यात् पञ्चदशवर्षाणि यजेत तर्ह्येवं सम्पद्येत' इति। दर्शपूर्णमासयाजी की तीस वर्ष तक जितनी दर्शपूर्णमास प्रयोग संख्या होगी, उतनी दर्शपूर्णमास-प्रयोग संख्या सम्पत्ति दाक्षायणयज्ञी को पन्द्रह वर्ष तक अनुष्ठान करने मात्र से ही हो जाती है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

